प्रकाशक—
घासीराम प्रकाशन विभाग
आर्यप्रतिनिधि सभा ( उत्तर-प्रदेश )
लखनऊ।

श्री डा० देवेन्द्रपाल अग्रवाल, एम० बी० बी० एस० (लखनऊ); एल० ओ० (मद्रास); डी० ओ० एम० एस० (बम्बई); आई स्पेशलिस्ट मेरठ आई होस्पिटल, प्यारेलाल शर्मा रोड, बेगम ब्रिज मेरठ निवासिनो मात्रा श्रीमती यशोदा-देव्या प्रदत्त धनेन पुस्तकमिदं प्रकाश्यते।



प्रथमवार १००० }
सम्वत् २००८ वि० }

मूल्य।

# प्रस्तावना

"सर्वे वेदा यत्पदमामनंतीत्युपक्रम्य यस्य विश्वजनीनमहिमा ऋषिमहर्षिभिर्बहुधा जेगीयते, यच्च ब्रह्मणो नाम प्रतिमा रूपेण वेदविद्भिः सहस्रधा विविच्यते, यश्च ओङ्कार आकल्पारम्भात् समाधिनिष्ठ-योगिजनैर्हृदि संस्मर्यते, यञ्चार्थभावनया जपन्तः कोटिशः श्रद्धालवः साधका अध्यात्मदृशात्मसाक्षात्कारसाधनायां प्रयतन्तेतराम्। यं हि अनादृत्याधुनिकशिश्नोदरपरायणाः पुरुषाकाराः किम्पुरुषावपुषास-काषा अपि हृदिकषायवन्तो इह द्विपदा पुण्यक्षेत्रे आर्यावर्त्ते-विचरन्ति, तमोङ्कारात्तरब्रह्माविदित्वा न तेषां शान्तिर्न च सुखावसरले शोऽपि। अनार्जवव्याधिप्रपीडितेऽप्यस्मिन् स्वतन्त्र भारत राष्ट्रे संस्कृत भाषायाः सांस्कृतिक साहित्यरत्न राशिरपि न समीचीनतया शिक्षायां समाद्रियते। निबन्धेऽप्यस्मिन् पद वाक्यस्वामिनः श्री स्वामी अमृतानन्द सरस्वती यतिना विविधयुक्तिप्रमाणरीत्या "ओङ्कारदर्शनम्" निर्मा-याध्यात्मविद्या जिज्ञासमानेभ्यः स्वाध्यायतत्परेभ्यश्च संस्कृतवाग् विद्भ्यः प्रचुरमुपकृतमेवञ्च सोऽयं यतिस्तेषां कृतज्ञतायाः साधु-भाजनः समजनि। मुद्रणादिस्खलनमवगणय्य ओङ्कारदर्शन दर्शनेन लाभवन्तो भवेयुः सहृदयो वेदरहस्यार्थानुसन्धित्सव इति कामयते—

—रामदत्त शुक्लः

# किञ्चिन्निवेदनम्

क्व सिद्धमाश्चर्यमिदंजगत्याम्, ब्रह्माभिधानप्रणवेति संज्ञम् ।
दुःश्रन्थ तद्ग्रन्थिविमोचनोत्का, मतिर्मदीयाक्वचशारदीयम् ॥

तथा तितीर्षन्नपिदार्शनीयं, पदाम्बुराशिं न प्रवेदभीतिम् ।
दृढं विशाल शरणं यदार्षं, द्वैपायनं पोतमुपाश्रितोऽस्मि ॥

व्याख्यानरत्नानिवहूनि धीरा, वितेनिरे तत्त्वविवेचनानि ।
तथापि मानव्यहितप्रयुक्तो, ममैषयत्नो न न जोषणीयः ॥

गुरुप्रसादाद् यद्वेदि तत्त्वं, गिरांमहर्षेस्तदु वोऽर्पयामि ।
प्रतीष्य तुष्यन्तु वुधा अनीर्ष्या, मुदा च विज्ञाःपरिशीलयन्तु ॥

ये नाभमान्याःपदिनः कृतज्ञाः, स्खलन्ति तेऽपीहनचित्रमेतत् ।
प्रज्ञाः प्रमादं परिशोधयन्तु, तत्त्वाववोधैकरसा न वुद्धिः ॥

अमृतानन्द सरस्वती

# कृतज्ञता प्रकाशः

यत्कृपा कटाक्षेणानेक-विधसाहाय्यं लाभं लाभम् , यदुपकृतिं सृष्टि रचना वैचित्र्यञ्चाहर्निशं स्मारं स्मारं महर्षयश्छन्दोभिर्विविधै र्यस्य विशेषानवद्यान् गुणानुद्गायन्ति किल । तस्य परमगुरोः सूर्यवत्सर्वविद्यावद्योतिनो, महत ऋग्वेदादिशास्त्रस्य योनेः परम ब्रह्माभिधानस्य अस्य प्रत्यक्षीभूतस्य जगत उत्पत्ति स्थिति संहार हेतोः सर्वसाम्यातिशयविनिर्मुक्तस्य, परमपितृस्थानापन्नस्य, प्रभोरहं कृतज्ञतांवहे । अनुवेलं च स्मरामितावेव जगत् पितराविति ।

ये चाप्यग्रेसरा विरक्तमण्डलस्य, वर्षितारः कामानां छात्रेषु, अनुशासितारः संसारिणां भव्यमार्गस्य; परमार्थगुरवः परमतत्त्व जिज्ञासमानानांप्रातःस्मरणीया गुरुवर्याः स्वामिसर्वदानन्द सरस्वती महाभागाः शतशो धन्यवादैः सभाज्यन्ते । न च पार्यते मया यथावत्तान् प्रत्यपि कृतज्ञतां गिरा निर्वक्तुमिति ।

ये चापिच्छात्रगणवितायमानकीर्त्तिचन्द्रिका धवलीकृत दिक् चक्रवालाः, शब्दशास्त्रानवद्यबोधपारीणाः, परत्र स्वावबोध संक्रान्ति लब्धवर्णा, निरस्तसमस्त प्रतिवादिव्यूहाः आचार्य चरणाः, विद्यागुरवः, श्री हरिनारायण त्रिवेदिनः सुत निर्विशेष- मुपलालयन्तो मां समग्रमपि त्रिमुनिव्याकरणं, तथा नव्यव्याकरणं तत्त्वतोऽबूबुधंस्तेष्वाजीवनं कृतज्ञतांवक्ष्यामि । नतोत्तमाङ्गश्चानुवेलं स्मरिष्यामि तत्रभवतः सुकृतिनः ।

ये चापिलक्ष्मणपुरस्थेषु, श्रौतकर्मपरायणेषु, आर्यशिरोमणिषु, "श्रीरामदत्त शुक्ल" इतिपदलाञ्छनेष्वनल्पां कृतवेदितांवहे । यैरत्र ग्रन्थप्रणयने प्रेरितोऽत्रावस्थितोऽन्तरा समुचितपथादर्शित, आदरेणोपचरितश्च । श्री पं० सूरतरामशास्त्रिणोऽप्युत्तर काशी वास्तव्या अपिधन्यवादार्हाः । तथा च पुण्यशीला, श्रीयशोदादेवी माता श्रीदेवेन्द्रपालस्य चक्षुचिकित्साविशेषज्ञस्यावश्यं धन्यवादमर्हति यया मत्कथनेन स्वकीयधनेनेदं पुस्तकं मुद्रापितम् ।



# ओम् प्रतिष्ठ

"ध्यायं ध्यायं परं ब्रह्म स्मारं स्मारं गुरोर्गिरः ।
ओंकारदर्शनग्रन्थं कुर्मः शास्त्रसमीहितम्" ॥

ओमिति सर्वोत्तमं मुख्यतमं पवित्रञ्च परमात्माभिधानं वेदादि सच्छास्त्रनिष्पन्नम्, ऋषीणां विदुषाञ्चानुभवसिद्धम्, उपनिषत्सु चेदं चारुरीत्या व्याख्यातम्, युक्तार्थसंपादकायुक्तार्थनिवारकदर्शनग्रन्थेषु चैनं द्वारीकृत्योपासना विधीयते, वेदेष्वनेनैव स्मरणविधेरादेशोऽस्ति, ओम्पदवाच्यपरमात्मनः साक्षात्कार एवापवर्गनिदानमित्यत एव सर्वत्रास्य भूरिमहिमा जेगीयते । तद्यथा—

तमेव विदित्वातिमृत्युमेति नान्यःपन्थाविद्यतेऽयनाय । यजु० अ १३ मं० १८—अथातोब्रह्मजिज्ञासा इति च वे०१-१-१

ननु ऋचि साम्नि अथर्ववेदे च ओमित्येतदक्षरस्य प्रयोगादर्शनात् छतपथैतरेयादिषु पुरातनग्रन्थेषु च विशेषवर्णनाभावाच्चाचिरप्रवृत्त प्रचारोऽयं शब्द इत्यनुमीयते । यत्तु यजुषश्चत्वारिंशत्तमेऽध्याये द्विरयमधीयते, तदपि बहुसन्देहानेव जनयति, । यतोऽस्मिन्नध्याये शाखाभेदेन विविधपाठैर्बहुभिर्व्यत्ययैर्लुप्तप्रक्षिप्त बहु शब्दैश्च दोष गृहीतत्वात् कतमः पाठो वैदिक इत्यवधारयितुं सम्प्रति न शक्नुमो वयम् । तथा चैतस्योपनिषत्त्वमेव न वेदत्वम् पश्चाद्वेदीभूत इत्युप निषद्विदां सम्मतिर्वर्तते । यत एते कर्मसु न विनियुक्ताः । सम्प्रत्यपीशा

वास्यामीति वाजसनेयोपनिषदादिनाम्ना, उपनिषदां मध्ये सर्वश्रेष्ठेयं पारेगण्यते। अतोऽत्र ( यजुश्चत्वारिंशत्तमे अध्याये ) पठितेनोंङ्कार शब्देन नाधुनिकत्वशङ्काविनिवृत्तिः।

अन्यच्च, अग्निवायुमरुदिन्द्रादयश्शब्दा बहुशः प्रयुक्तत्वादिमान्येव ब्रह्मणः प्रियतराणि नामानीति चावगम्यते। यागप्रचारावसरे केनापि कारणेन कतिपयेष्वर्थेषु ऋत्विग्भिः संकेतित उपनिषत्समये शनैः शनैः ब्रह्मवाचको जात इति शब्दशास्त्रविदां परामर्शः सुष्ठुतरं प्रतिभाति। सामगीतौ हाई हावू औहाई हिं हुं इत्यादि साम स्तोभा निरर्थकाः केवलं विश्राम प्रयोजना उच्चार्यमाणा यथा दृश्यन्ते तथैवायमपि। अस्मिन्विषये बलवत्तरं युक्तियुक्तञ्च प्रमाणमप्युपलभ्यते तद्यथा अकार ककारादि वर्णसमाम्नायवदस्मादक्षरात् कार प्रत्यय विधानेन वर्णविशेषत्वमेवास्य समायातम्, नच वाचकत्वं कदापि। ओकार मुपासीतेत्यनेन ओकाररूपो वर्णस्तस्यैवोपासना प्रतीयते, नतु तद्वाच्यस्य, तद्वदिहापि। इन्द्राग्निप्रभृतिब्रह्म वाचकेभ्यः कारप्रत्ययादर्शनाच्च। एवं विविधैर्हेतुभिरोङ्कारशब्दस्य सामगीते विशेषे संकेतत्वमेव प्रतीयते पश्चाद्भूरिसंचरो यदृच्छया स्वस्व संप्रदायानुसारेण सन्निवेशार्थः कृतसंस्कारः पवित्रीभूतो यज्ञादि सत्कर्मसु लब्धोत्तमस्थानः संवृत्तः। तस्माद्वैदिकत्वादिन्द्राग्निप्रभृति ब्रह्मनामवन्नायं श्रेष्ठपदमर्हति। तत्कथं वैदिकैर्भवद्भिर्ब्रह्मणः प्रियवाचकत्वेनाक्षरमिदं प्रयुज्यते इति तु न जानीमो वयमित्याशङ्कायां ब्रूमः।

विद्यते खल्वेतस्य परम प्रसिद्धस्याक्षरस्य व्याख्यानं वेदेषु तथाहि ऋचो अक्षरे परमे व्योमन् ( ऋ० २।३।२१० ) निरुक्त परिशिष्टे ( १,१० ) इत्यस्य व्याख्यानावसरे यास्काचार्यः शाकपूण्या द्याचार्यत्रयस्यमतं व्याचचक्षे। "कतमस्तदेतदक्षरम् ? ओमित्येषावागिति शाकपूणिः निरु० १-१०, शाकपूणे राचार्यस्यमतेऽक्षरवाच्योऽत्रौङ्कारः। पुनःशङ्कतेसाक्षादोङ्कारस्यात्र

प्रयोगाभावात् तत्कथं शाकपूणेर्व्याख्यानस्य प्रामाण्यं स्यात् । पुन-रप्यस्य मंत्रस्य तत्रैव त्रिधा व्याख्यातत्वात् । शाकपूणिपुत्र आदित्य परकं मन्यते । अपरेत्वात्मपरं व्याचक्षते । तत्कथमनेन मन्त्रेण निर्णयो भवितुमर्हति ? अत्र समाधीयते, अस्तु तावत् शाकपूणिसमये ओमित्यस्यासीत्प्रचार इति त्ववश्यमुररी करिष्यन्ति भवन्तः । शाक-पूणेः यास्काचार्यादपि चिरन्तनत्वाच्चिरन्तनप्रचारोऽयं नाधुनिक इति पर्यवसितम् । किन्त्वस्मिन्नपिमन्त्रे प्रत्यक्षो ह्योङ्कारः सुनिपुणम-तिभिभवद्भिः सूक्ष्मदृष्ट्यावलोक्यताम् । व्योमन्नित्यत्र वि+ओम्+ अन् इति पदत्रयं विद्यते । विः अन् इत्येतयोर्द्वयोर्मध्येविराजते च ओम् शब्दः तत्कथं निगद्यते भवद्भिर्नास्य प्रयोगः साक्षादिति । विशब्देन विशिष्टा मूलप्रकृति गृह्यते, अन् शब्देन जीवः । अनिति प्राणितीत्यन् जीवः पुरुष आत्मा इति । अन् धातोः क्विप् ओम्पदेन ब्रह्म, पदार्था-नां त्रित्वाद्धेतोरिमानेव त्रीन् पदार्थानवगमयितुं व्योमन् पदेन शास्ति मातृभूताऋक् । एतत्त्रयमविदितञ्चेत् किमृचा करिष्यति, व्यर्थ वेदानामध्ययनमिति सम्यक् सूचयति भगवान् कारुणिकः परम-पुरुषः । ब्रह्म खलु सर्वस्य मध्ये तिष्ठतीति सूचयितुमितरयोर्मध्ये ओम् शब्दः प्रयुक्तः । एतदेव प्रतिपादयन्तः—

अङ्गुष्ठमात्रः पुरुषो मध्ये आत्मनि तिष्ठति ।" ( कठ० ४।१२)
'हृदि ह्येष आत्मा" ( प्रश्न० ३।६ )

इत्येवंविधा उपनिषत्सु सन्ति बहवःप्रयोगाः यास्काचार्योप्येतस्य मन्त्रस्य त्रीनेवार्थान् व्याचक्षाणः "सन्ति चात्र त्रयः पदार्थाः" इति सम्य-क्प्रदर्शयाञ्चकार । ओम्पर आदित्यपर-अध्यात्मपरश्च मन्त्रोऽयम् । आदित्यशब्देन सर्वत्र द्योतमाना प्रकृतिरत्र विवक्षिता । ओं शब्देन च ब्रह्म । अध्यात्म पदेन पुरुषः शारीरः । एतदर्थत्रयस्य व्याख्यानेन महान् गूढार्थः प्रकाशितो यास्काचार्येण वेदविदां वरिष्ठेन । मन्त्रे व्योम न्निति लुप्तसप्तम्यन्तं पदं विशेष्यम् अक्षरे परमे इति पदद्वयं विशेष-

णाम्, त्रयाणामप्यविनश्वरत्वादक्षरत्वम्, उत्कृष्टत्वात्परमत्वमिति सङ्गतिः।

"हाइ" "हावू" प्रभृति सामस्तोभा अप्यर्थवन्तः सप्रयोजनाश्च।" "अयं वाव लोको हाउकार" इत्यादि निर्देशात्

यद्यपि वर्णात्कारस्तथापि नेदमर्थान्तरबाधकम्, 'अकारो विष्णुः, उकारः प्रजापतिः इत्यादि प्रयोग दर्शनात्, वर्णानामर्थवत्ता च प्रायो निःसंशया, "खं ब्रह्म, कः प्रजापति रित्यादिप्रयोगदर्शनात्। किञ्च वर्णानामर्थवत्त्वं महाभाष्येऽपि निरूपितम्, तत एव गृहीत सज्जनाः। यजुषोऽन्त्याध्यायस्य वेदत्वञ्चैकोनचत्वारिंशदध्यायानां यथाऽऽस्थीयते तथैव तस्याप्याऽऽस्थीयताम्। अथवा किंचिद्विनिगमकं, तर्हि तद्वद। येन भेदः समातिष्ठेत् नोचेदुभयोरपि दलयोर्वेदत्वं निः संशयं मूर्ध्नि विराजय। किं मुधैव वाग्विलोडनेन।

यत्तु सायणाचार्येण स्वकीये ऋग्वेदभाष्येऽर्थचतुष्टयमभ्यधायि तन्निजपाण्डित्यमेव प्रदर्शितम्। तदिह व्योमन् शब्दो वेदचतुष्टये बहुषु स्थलेषु एतस्मिन्नेवार्थेप्रयुक्तः "वेदेषु प्रयोगादर्शनान्नायं वैदिकः शब्द" इति यदुक्तम् तदसङ्गतं निष्पन्नम्। वेदतत्त्वं परमं निगूढमित्यस्माद्धेतोः तदर्थं कश्चिदेव विजानाति। अतोऽत्रविषये इदमितीयत्ता नावधारणीया किन्तु सद्भावेन सदा तत्त्वं विजिज्ञासनीयम्। अहोविगतसन्देहा वयं संवृत्ताः स्मः।

अन्यदप्युदाहरणं वेदे दृश्यते—यथा हि

**ओमासश्चर्षणी धृतो विश्वेदेवास आगत दाश्वांसो दाशुषः सुतम् ( ऋ० १—१—६ )**

हे विश्वेदेवासः सर्वेविद्वांसः यूयंदाशुषो दत्तवत आदरयितुः, मम सुतं सोमप्रधानमन्नं ग्रहीतुम्-आगत=आगच्छत ममान्नं गृहीत्वा गृहं शोभयत। कथं भूता यूयम् ओमासः ओम् ब्रह्मणः

उपवेष्टारः ब्रह्मसमीपोपवेशका ब्रह्मविद् इत्यर्थः। 'अत्र आस्ते' क्विप्। आसते इत्यासः। ओम् ब्रह्मण आस इत्योमासः। षष्ठी तत्पुरुषः। पुनः कथं भूताः, चर्षणीधृतः चर्षणीनां मनुष्याणां धृतः धारयितारः स्वेन उपदेशेन प्रजानां पालका इत्यर्थः। इहापि धृधातोः क्विप्। पुनः दाश्वांसः विज्ञानप्रदाः।" अत्र ओं शब्दस्यप्रत्यक्ष-प्रयोगोऽस्ति अवितृ मन्तृ कामयितृ श्रोतृ-प्रभृत्यर्थोऽपि ओम् शब्दः धातोस्तदर्थत्वात्।

व्याकरणरीत्या **अ-उ-म्** इत्येतद्वर्णत्रययोगेन ओम् शब्दस्य सिद्धिर्जायते अथमव्युत्पन्नपक्षः। द्वितीयश्च अव धातोः **"अवतेर्मन्टि लोपश्च"** इति मन् प्रत्यये टिलोपे **"ज्वर त्वर०"** इत्यूठि गुणे च ओम् शब्दो निष्पद्यत इत्यपरो व्युत्पन्नपक्षः। अतएव अवितृ मन्तृ कामयितृ श्रोतृ प्रभृत्यवधातोरर्थानाम्वाच कोऽयमोम् शब्दः। यतो हि अव धातोः रक्षण, गति, कान्ति, प्रीति, तृप्ति, अवगम, प्रवेश, श्रवण, स्वाम्यर्थं, याचन, क्रिया, इच्छा, दीप्ति, अवाप्ति, आलिङ्गन, हिंसा, दान, भाग, वृद्धिषु प्रयोगदर्शनात्

तत्र रक्षणम्—साक्षात्परम्परया वा सर्वेषां पालनम्:—

यथा—**गन्तारा हि स्थोऽवसे हवं विप्रस्य मावतः।**

**( ऋ० मं० १ सू० १७ मं० २ )** अत्रावतीरक्षणार्थं।

गतिर्नाम—ज्ञानं गमनं प्राप्तिश्चेति त्रयोऽर्थाः। ज्ञानंतु सर्वदातीतानागतानां याथार्थ्येन सर्ववस्तूनां ज्ञातृत्वम्।

यथा—**वयं मित्रस्यावसि स्याम सुप्रथस्तमे।**

**( ऋ० मं० ५ सू० ६५ मं० ५ )**

अत्रावतीति ज्ञानार्थकः।

गमनं नाम—स्थिर स्वभावेऽपि संसार चक्र नियन्तृत्वम्।

"विश्वासुविद्व वितेव हव्यो" (ऋ० मं० ८ सू० ७२ मं० १५ ) अत्र 'अविता' इत्यस्य गन्तेत्यर्थः । ईश्वरस्यो ओम् वाच्यत्वे अव धातोः गत्यर्थकत्वे प्रमाणम् "गतिसामान्यात्"। ( वे०सू० १।१।१०) । प्राप्तिः आकाशवत्सर्वगतः । उक्तं च—
"आकाशस्तल्लिङ्गात्" ( वे० सू० १।१।२२ )

प्राप्तौः—शचीव इन्द्रमवसे कृणुध्वमनानतंदमयन्तं पृतन्यून् ( ऋ० मं० १० सू० ७४ मं० ५ ) अत्र अवसे इत्यस्य प्राप्नोषीत्यर्थः । कान्तिः प्रकाशकः—निष्कामो ऽपीश्वरो जीवेच्छा पूरकः । "कामाच्चानुमानापेक्षा" ( वे० सू० १ । १ । १८ कामाच्चेत्यस्य कामयितृत्वादित्यर्थः । ब्रह्मणः प्रकाशरूपार्थेप्रमाणं "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्" (यजुः ३१·१८) कान्तौः—अवानोअग्न० (ऋ० १· ७९·७ )। प्रीतिः आनन्दमयः'आनन्द मयो ऽभ्यासात्"(वे० सू० १ । १ । १२) यथा सोमं राजानमवसे ऽग्निं गीर्भिर्हवा महे" (ऋ० मं० १० सू० १४१ मं० ३)

अत्र अव से इत्यस्य प्रीणयसीत्यर्थः ।

तृप्तिः—पूर्णकामः तृप्तौः—सं वो ऽवन्तु सुदानव ऽउत्सा अजगरा उत । (अथर्व का० ४ सू० १५ मं० ) अत्र सायणः अवन्तु इत्यस्य प्राणिन इत तर्पयन्तु त्याह ।

अवगमः । मंगल रूपो मोक्षज्ञानप्रदः "ऋते ज्ञानान्नमुक्तिः" इत्युक्तेः । अवगमेः—स प्रत्नथा कविवृध इन्द्रो वाकस्य वक्षणिः शिवो अर्कस्य होमन्य स्मत्रा गन्त्ववसे ( ऋ० मं० ८ सू० ६३ मं० ४। अत्रावसे इत्यस्य ज्ञानप्रदानायेत्यर्थः ।

"अत्रा युक्तो वसातारमिच्छा दथो" (ऋ० मं० १० सू० २७ मं० ९) अत्राप्यवसातारमित्यस्येच्छा दातारमित्यर्थः ।

प्रवेशः—सूक्ष्मत्वात्सर्वगतः '-अणोरणीयान्महतो महीयान्" 'तं दुर्दर्शं गूढमनु प्रविष्टं गुहातीतं" (कठ २ । १२) अत्र परमात्मनः सर्वत्रानु प्रविष्टत्वमुक्तम् ।

यथाहि मन्त्र : "धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः । स चेतसो विश्वेदेवा यज्ञं प्रावन्तु नः शुभे" (यजु० अ० १८ मं० ७६) अत्रावन्त्वनेन परमात्मनो यज्ञप्रवेश उक्तः ।

श्रवणं—श्रोत्रेन्द्रियस्यनिर्मातृत्वाद्व्यक्ताव्यक्तशब्दानां श्रावयिता. श्रोत्रस्य श्रोत्रं मनसोमनोयत्" (केन मं० २) "श्रुतत्वाच्च" (वे. सू. १-११) इति सर्व वेदान्तेषु परमात्मनः श्रावकत्व मवगम्यते ।

तद्यथा—

"समानं वां सजात्यं समानो बन्धुरश्विना । आनी सद्द भूतु मामवः । (ऋ. मं-८ सू. ७३ मं १२)

अत्र अवः इत्यस्य सर्वहितोपदेशं श्रावयेत्यर्थः ।

स्वाम्यर्थः—समेषां स्वमहिम्नि प्रतिष्ठितत्वादधिपतित्वाच्च स्वामी । यथाचोक्तं—"प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव ।" (ऋ. १०।१२१।१०) "यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव । य ईशे अस्य द्विपदः०" (ऋ० १०।१२१।३) इत्यादि

यथा—

"पुरं न धृष्णावा रुजकृष्णाया बाधितो विशा । अन्ति सद्भूतु मामवः"
(ऋ० मं० ८ सू० ७३ मं० १८)

अत्र अवइत्यस्य स्वामित्वं कुरु इत्यर्थः।

याचनं—सर्वैश्वर्यसम्पन्न हेतुत्वात् सर्वेषां प्रार्थनाश्रयः
यथाहि—

'महि वो महतामवो वरुण मित्रार्यमन् । अवा स्या वृणीमहे।" ( ऋ-मं-८ सू० ६७ मं ४ ) अव धातोरत्र याचन रूपो व्यापारार्थः

क्रिया—क्रियमाणजगतः प्रेरकत्वात् ज्ञानपूर्वकक्रियायाः संचारकः।
'तदेजति तन्नैजति' ( यजु० अ० ४० मं० ५ ) 'ईक्षतेर्ना शब्दत्वम्" ( वे०-सू-१-१-५-) इति।

( तदैक्षत बहु स्यां प्रजायेय"
( छा० ६-२-३ ) इति च। यथा च—"तत्तदश्विनोरवो जरिता प्रति भूषति। मदे सोमस्य पिप्रतोः। ऋ० मं० १ सू० ४६ मं० १२ ) अत्र 'अव' इति पदं क्रियामाह।

इच्छा—आप्तकामोपि प्राणिनां शुभेच्छाप्रकाशकः । यथा च—

"सेहभवो यमवथ यूयमिन्द्रश्च मर्त्यम्"
( ऋ० मं० ४ सू० ३७ मं० ६ ) अत्र अवतेति पद मिच्छार्थकम्।

दीप्तिः—तेजोमयत्वात् अज्ञानतिमिरविनाशकः । यथा चास्य

ज्योतिः स्वरूपमुक्तम् । "उद्वयन्तमसस्परिस्त्रः पश्यन्त उत्त-रम् । देवन्देवत्रा सूर्यमगन्मज्योतिरुत्तमम्" ( यजुः ३८ । २४) यथा च—प्रणो देवी सरस्वती वाजेभिर्वाजिनीवती, धीनामवित्र्यवतु ( ऋ० मं० ६ सू० ६१ मं ० ४ अत्र हि दीप्त्यर्थकोवधातुः ।

अवाप्ति—अतीन्द्रियत्वादप्रतीयमानत्वाच्चापि शुद्धान्तःकरणे स्व-रूपदर्शकः। यथा—"अतो देवा अवन्तु नो यतो विष्णु र्विचक्रमे ।" ( ऋ० मं० १ सू० २२ मं० १६ ) अत्रावन्त्वि त्यस्यावाप्त्यर्थो लभ्यते।

आलिङ्गन—व्याप्यव्यापकसम्बन्धापन्नत्वात्सर्वत्रपूर्णरूपेण समवेततयासर्व सम्बन्धी—उक्तं च—ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्मदक्षिणतश्चोत्तरेण । अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् । ( मुण्डक ख०२ म० ११ ) यथा च "अँ शुनो ते अँशुः पृच्यतां परुषापरुः । गन्ध स्ते सोममवतु मदाय रसोऽच्युतः ॥ (यजु. अ. २० मं. २७) अत्र 'अवतु' एतत्पदार्थः "आलिङ्गयतु इति महीधरोव्वटा ऊचतुः ।

हिंसा—वेदपथरक्षकाणां अविद्यादिविरुद्धदुःखदोषाणां याथार्थ्येन ध्वंसकः । यथा—

"शरस्य चिदार्चत्कस्यावता दा नीचादुच्च चक्रथुः पातवे वाः । ( ऋ० मं० १ सू० ११६ मं० २२ ) अत्र अवतादित्यस्मिन् प्रयोगे हिंसानुकूलो व्यापरो धात्वर्थः ।

दानं—सृष्टेरारभ्यसुखसाधनपदार्थोपभोगाययथार्थज्ञान प्रदः ।

यथा—

**यो रायोवनिर्महान्सुपारः सुन्वतः सखा, तस्मा इन्द्राय गायत।** ( ऋ०मं० १ सू० ४ मं० १० ) अत्र स्वस्वत्वनिवृत्तिः पर स्वत्वप्रवृत्तिरूपदानार्थकोऽवधातुः ।

भागः—प्रलयेऽखिल संसार विभाजकः, दृश्यमानस्थूलप्रपञ्चस्य सूक्ष्मत्वाददृश्यत्व सम्पादनस्य हेतुरिति यावत् । यथा चोक्तम्—

**उत स्येनः पर्वतासः सुशस्तयः सुदीतयो नद्यस्त्रामणे भुवन् । भगो विभक्ता शवसावसा गम दुरुव्यचा अदितिः श्रोतु मे हवम्,**

ऋ. ५-४६-६ अत्रावसेति विभागेनेत्यर्थकः ।

वृद्धिः—सृष्ट्यादौ जगदुत्पत्तये सूक्ष्म प्रकृति विस्तारस्य स्थूल कार्यवृद्धेः, जीवादृष्टफलभोगहेतोश्च वर्द्धकः । प्रजापतिश्चरति-गर्भेऽन्तर्जायमानो बहुधा विजायते ( यजुः ३१।१९ ) यथा च—

**"वसुभ्यस्त्वारुद्रेभ्यस्त्वादित्येभ्यस्त्वा सञ्जानाथान्द्यावा-पृथिवी त्वा वृष्ट्यवताम्।"** ( यजुः २।१६ )

अत्र अवताम् अस्य पदस्य वृष्ट्यादिना वर्धयतामित्यर्थः । अवधातुरिह वृद्ध्यर्थः ।

व्याकरण मते यदि विमृणुमस्तदा तु 'ओम्' शब्दो ह्यनेकार्थद्योतकः संपद्यतेतराम् । स च वेदेषु वहु प्रकरणेषु पठ्यते । अस्माभिस्तु इह दिङ्मात्रं दर्शितम् । यथामति दर्शयिष्यतेऽग्रेप्यन्यत् ।

नन्वेवंओम्पदार्थघटितस्य कस्यचित् पुरुषस्य ओम् इति नाम भविष्यति नवेतिचेत् ? अत्रोच्यते तस्य ओमितिनामभुख्यार्थे न संगच्छते किन्तु गौणार्थ एव । यतोहि पुरुषा अल्पज्ञा एकदेशिनो न्यूनतायुक्ताः पूर्णता हीनाश्च भवन्ति । तस्मात् कस्मिन्नपि पुरुषे एतेऽर्था पूर्णतया न समाविशन्ति । अतः परमात्मन एवेदं मुख्यं नामेति सोसूच्यते । अयमोम्

शब्दः व्याकरणादिशास्त्रदृष्ट्या टाबादि लिङ्गद्योतकप्रत्ययै र्वचनार्थक स्वादिविभक्तिभिश्च न परिवर्तते। अयं शब्दो वृद्धिह्रासशून्यः सदैकरसश्चास्ति , अव्ययत्वात् । अव्ययाद्धि लिङ्गादिबोधकप्रत्ययानां संख्याबोधकविभक्तीनां च—

"अव्ययादाप्सुपः" इति लोपः संजायते। अव्ययत्वंचात्र

"कृन्मेजन्तः" इति सूत्रेणावेहि। इत्थं ब्रह्मवाचक ओं शब्दो हि ब्रह्मवन्निर्विकारीति निष्प्रत्यूहम्। यथा विभक्तिसम्बन्धेन वृक्षादयः शब्दा- भिद्यन्ते न तथायम् ओम् शब्दः कर्तृकर्मकरणादिकारकद्वारा विभक्तिसम्बन्धेन भिद्यते, यतोहि ओम् शब्दाद्विभक्तयः स्वयमेव लुप्यन्ते। अस्याभेद्यत्वेन विभक्तिशक्ते राश्रयत्वमेव नास्ति, यथा ब्रह्मन् इति शब्दात्प्रथमा विभक्तौ सत्यां यद्रूपं तदुदाह्रियते

"सर्वं खल्विदं ब्रह्म" अत्र ब्रह्मपदं कर्त्रर्थं बोधयति। द्वितीया विभक्तौ ब्रह्मन् शब्दस्यरूपम्—

"यो ब्रह्माणं विदधाति पूर्वम्"अत्र ब्रह्माणमिति पदं कर्मार्थकम् 'ब्रह्मन्,शब्दात्तृतीयायां "ब्रह्मणाव्याप्तं सर्वम्" अत्रहि व्याप्तिकरणं ब्रह्म। चतुर्थी विभक्तौ"ब्रह्मणे नमः" अत्र नमोयोगे चतुर्थी पंचम्यां च 'ब्रह्मणः प्रादुर्भवन्ति वेदाः।' 'अत्र प्रादुर्भवनस्यापादानं ब्रह्म। षष्ठी विभक्तौ 'ब्रह्मणः सृष्टिः' अत्रहि सृष्टिसंबन्धि ब्रह्म। सप्तम्यां च सर्वं ब्रह्मणिसमाश्रितम्।

अत्रहि आश्रयस्य ब्रह्माधिकरणम् ।:तद्यथा एकमेव ब्रह्म पदं कर्त्तृकर्मकरणसम्प्रदानापादानसम्बंन्धाधिकरणरूपासु विभक्तिषु विभज्यते न तथा ओमिति पदं विभाजयितुं पार्यते। अस्याभे

आगच्छन्ती विभक्तिः किल स्वकीयं रूपमपनयते। भेदकारकविभक्ते-र्नेदं स्थानम्'। अग्निस्तदेववस्तुदहति यत्किलदाह्यं भवेत्' अदाह्य वस्तुदाहयितुं नाशयितुं वा अग्नेः शक्तिरेव नास्ति। तत्रतु अग्निः स्वयमेव शाम्यति। इत्थं ह्ययमोम् शब्दः सर्वदा स्वमहिम्न्यातिष्ठति। अयमे-वास्य स्वभावः। किमपि वस्तु स्वस्वभावं न जहाति। अपरिवर्त्यं वस्तु परिवर्त्तितुं यश्चेष्टते स स्वयमेव ह्यबलः सन् प्रणश्यति। वचनेन व्यत्ययो यथा 'पुरुषः पुरुषौ पुरुषाः' इत्यत्रहि केवलपुरुषशब्द एक वचन -द्विवचन- बहुवचन - प्रत्ययविधानेन भिन्नरूपाणिधारयति। तथोच्चारणभेदं सम्पाद्य एकः पुरुषः, द्वौ पुरुषौ बहवः पुरुषाः इति विविधानर्थान् द्योतयति। नैवमोमिति शब्दे दर्शनोच्चारण वचनभेदाः कदापि भवन्ति। अव्ययत्वात्। तल्लक्षणंच—

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु, ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥

उक्तंच महाभाष्ये "कृन्मेजन्त" इति सूत्रे 'क्व पुन र्नव्येति" स्त्री पुंनपुंसकानि सत्त्वगुणाः एकत्त्व द्वित्वबहुत्वानि च। एतानर्थान् केचिद्वियन्ति केचिन्न वियन्ति' ये न वियन्ति तदव्य-यम्। न वियन्तीति विविधप्रकारप्रापकान्न प्राप्नुवन्तीत्यर्थः।

ननु लिङ्गसंख्याकारकान्वया योग्यत्वमव्ययत्वमित्यभियुक्त मतम् कारिकोक्तदिशा लिङ्गसादृश्यान्वयाङ्गीकारे न सङ्गतम्। तेना व्ययैर्लिङ्गसम्बन्धप्रतीतेरिति चेन्न। त्रिषु लिङ्गेषु लिङ्गाभाववत्व मव्ययानां सादृश्यमित्यर्थं कारिका तात्पर्यात्।

तदेवं व्याकरणरीत्या निष्पन्नोऽयमोम् शब्द एकोनविंशत्य र्थानां द्योतक इत्युक्तम्।

गणितविद्याकुशला इमं नियमं सम्यक् विदन्ति यदेकत्व संख्या बोधकः प्रथमोऽङ्कः स्वतः पूर्णरूपेण सर्वतन्त्रस्वतन्त्रोऽस्ति। तस्मात्

अस्य सत्तायाः सद्भावः सर्वेष्वङ्केषु समानः। सर्वेषामङ्कानाञ्च सत्तास्मिन् एकत्वबोधकेऽङ्के विद्यमानास्ति । नवसंख्यात्मको नवमोऽङ्को न खलु सर्वतन्त्रस्वतन्त्रः किन्तुपूर्णरूप एव। स एव पूर्ण इत्युच्यते, यः स्वस्मिन् न्यूनत्वं न आदत्ते। यतो हि संख्या एकत्व बोधिकायाः संख्यायाः समारभ्य नव संख्यां यावत् समाप्यते। शेषः सर्व एतेषां नवाङ्कानामेवविस्तरः । एकसंख्यात्मकोऽङ्कः सर्वस्यादि-मध्यावसानेषु व्यक्तो दृश्यते यथा एकत्व बोधकोऽङ्को द्वित्व बोधक संख्यायां सन्निविष्टः। किंतु द्वित्व बोधको द्व्यङ्कः एक संख्याकेऽङ्के नास्ति। इत्थं न्यूनसंख्यायाः सत्ता महत्संख्यायां लभ्यते। एकत्व बोधकोऽङ्कः सूक्ष्मः। शिष्टाः सर्वे अङ्काः स्थूला एव। यथाहि सूक्ष्मस्य स्थूलेसमावेशो- जायते न तथा स्थूलस्य सूक्ष्मे समावेशोऽर्हति। नव रूपा संख्यापूर्णेत्युच्यते तदग्रे संख्याया अविहितत्वात्। यथैके-न सह एकयोजनेन द्वौ स्तः द्वाभ्यां सहैकस्य मेलनेन त्रयः सं-जायन्ते, एवमेवैकवृद्धौ संख्यावृद्धिः, एकस्य ह्रानौ संख्या ह्रासः। इदं ह्रासवृद्धिस्वरूपं नवसंख्यापर्यन्तं वर्धते नितान्तंचापचीयते।

नवाङ्कस्य व्यवस्था अन्याङ्का-पेक्षया भिन्नास्ति, यदा ह्येकत्व संख्या त्मकोऽङ्कोऽस्मिन्नवाङ्के-मिलितुमायाति तदा स वृद्धिमप्राप्य विन्दु रूपेण विपरिणमते, किन्तु स्व महत्वं न ह्रासयति अयं सदैव पूर्ण-तायाः साधकोऽस्ति। यतो हि विन्दु रूपेणैवाङ्केन प्रादुर्भूय गणित विद्यायाः पूर्तिः कृता। यद्यसावङ्कः पृथक्क्रियेत, तदा तु गणित विद्याया न काचिदपि परिस्थितिः स्यात्, न चैतद्गणितं नवाङ्का-भावे विद्याया स्थानमपि लभेत । विन्दुनवाङ्कयोर्मध्ये स्वरूपनिरूपितभिन्नतां विहाय न किमप्यन्तरम्। एतौ मिथः समावेव, एतेन नियमेन स्थिरोऽयं सिद्धान्तो निश्चयतेयत् कस्याप्यङ्कस्याग्र-तो विन्दुरपनीयेत चेत् ततो नवाङ्क एवापहृतः स्यात्। दृष्टान्तं नाव: गच्छन्तु पाठकाश्चैनत्।

'दश' संख्यात्मकाङ्कतो यदि विन्दुरपसार्यते तर्हि नवाङ्क एव लुप्यते यदिच एकोत्तर शततमेऽङ्के ( १०१ ) विन्दुलोपः क्रियेत तदा नवति संख्याया एव लोपो भविष्यति । नवति संख्यकेऽङ्के नवाङ्कस्तु विद्यते किन्तु ततोपि विन्दु लोपेनैकाशीति संख्या च्चीयते, अष्टभिः सहैकस्य मेलनेन नवैव जायते । एवं सर्वत्र ज्ञेयम् । कस्मादप्यङ्कतो विन्दूपसारणेनानयनेन च नवैव निर्यन्ति समायान्ति च । तस्मादयमनया रीत्या स्वपूर्णतां प्रकटयति । यथा चान्येषामङ्कानांमिथो गुणनेन न्यूनत्वमाधिक्यञ्च लभ्यते नवाङ्केन गुणनेन तु समानत्वमेव तस्य न कापि भेदः समुत्पद्यते ।

पाठका विस्मरन्तु यद् अव् धातोरेकोनविंशत्यर्थाः सन्ति, अत्र-नवाङ्क एकोङ्कश्चेतिद्वावङ्कौ विद्येते । एकाङ्कस्तु स्वरूपेणैव पूर्णस्वतन्त्रः नवाङ्के च न्यूनताया नावसरः कदापि । सदैवचायं पूर्णतायाः पक्षपाती भवन् समान रूपेचास्ते । अवधातोः ओम् शब्दः सिद्धः सन् पूर्णपरमात्मनस्तदनन्त गुणानाञ्च वोधकः संवृत्तः इति निःसंशयं प्रतिपद्यतेतराम् । नवाङ्के हि यदान्याङ्केष्विवैकाङ्कसंयोजनं भवति तदा नवाङ्कःसर्वानन्यानङ्कानुदरीकृत्य विन्दुरूपेण विपरिणमते । इदानीं दश रूपोङ्क एतद्विषयं समुद्धाटयति । एकत्वरूपोङ्कस्तु पूर्ण परमात्मनः ( स्वरूपेणैव सर्वेषामादि मध्यावसानेस्थितस्य ) सूचकोस्ति । विन्दुस्तु प्रकृतिवदवभासते । यथा हि वीजं स्वान्तःस्थवृक्षं निधाय तद्रूपमाद्यते कीदृशोपि भेदो न दृष्टिपथमायाति । तथैव प्रलयकालेऽखिलं जगन्नश्यमानं सत् सूक्ष्मरूपतया प्रकृतौ लेलायते, इयमवस्था सर्वथा प्रतर्क्या चिन्त्याचेति सुषुप्तिरेवैतद्विषयोदाहरणम् । एतदेव कारणं यन्निद्रावस्थाया वर्षसहस्रं एक घटिका तुल्यं सर्वेभ्यः समवर्ति चास्ति । सर्वो हि जन्तुः स्व स्वरूपं विस्मृत्य सुषुप्तौ निमज्जते । जाग्रद्दशायाञ्च पुनः सृष्टितारतम्येनमिथ्या ज्ञाननिमित्तकेषु

बन्धनेषु बाबध्यते । पुनः सृष्टि काले च ज्ञानद्वारा परमात्मनः प्रयासेन व्यक्तीभूय दृश्यतां पाप्राप्यते । मुक्तजीवास्तु हि विद्या तपःप्रभावेणाविद्या बन्धनाद्विनिर्मुक्ताः सन्तः पूर्णपरमात्मविचारेण स्वात्म साक्षात्कारेणच न्यूनता हीनाः सन्तः स्वस्मिन्नेव पोपूर्यन्ते । तेहि नवाङ्क सदृशा एव शेषाजीवा अज्ञान रूपेणप्रकृतिरूपेण वा कारण शरीरेण संश्लिष्टाः सन्तः आत्मज्ञानेन हीनाः बन्धनेन च युक्ताः, सुषुप्त्यवस्थायां विद्यमानाद्द्वयङ्कादारभ्याष्टाङ्का ऽ वध्यङ्क सदृशाः सन्ति । तथा चैस्वङ्केषु गुणनेन संकलनेन वा यदपि न्यूनाधिक्य मुत्पद्यते तत्सर्वम् अज्ञानाविष्ट जीवानां कर्मफलमेव, यच्च जगति ससानाय्य जन्ममरणहेतुक सुखदुःखभोगभाजिनः करोति यदा चेश्वरीयन्यायपद्धत्याश्रयं लभन्ते ये चैषु पुनरपीश्वरभक्ति योगेन पूर्णतामुपयान्ति त एवामृतत्वं प्राप्य मूर्धन्यधि शेरते !

एतेनेदमेव सिद्धं यदीश्वरः परिणामविकाररहित एक एवाद्विती-योऽसहायश्चेति । बिन्दुस्थानापन्नानादिप्रकृतेस्तेन सह सहचारो नित्यः जीवानाञ्चावस्थाबन्धमुक्तभेदाभ्यां द्विविधा । ये पूर्णप्रका-शान्तगतास्ते मुक्ता उच्यन्ते, अन्धकाराश्रिता अज्ञानावृता बद्धा इत्यु-च्यन्ते, नवाङ्क सदृशा मुक्ताः, इतराङ्कसदृशा बद्धाः । एकाङ्कनव संख्यात्मकमङ्कं च विहाय शेषाङ्कानां यातारतम्यसत्तास्ति साऽविद्या जन्या जीवानां कर्म रूपैवास्ति, जीवानां नित्यत्वात् कर्म व्यवस्थापि प्रवाहरूपेण नित्येति सुधियो विभावयन्तु ?

अत्रायं भावः । ईश्वर एकाङ्क समः प्रकृतिर्विन्दुसमा, नवाङ्क सदृशो हि मुक्तोजीवः, शेषा इतराङ्क सदृशाबद्ध जीवाः सन्ति, एषामङ्कानां तार-तम्यं जीवानां कर्माणि 'प्रकटयति, कर्मसंसारौ प्रवाहेणैवनित्यौ नतु स्वरूपेणापीति । अयमाशयो यन्मुक्ता वस्थायांकर्मप्रवाहोऽवरुध्यते प्रलया वस्थायां च जगत् दृष्टि पथं नावरोहति, इमं वैदिकसिद्धान्तं गणित

विद्यापि सौष्ठवेन प्रकटयति । यद्यपि गणितविद्याप्रयोजनमन्यदेव, तथापि यस्मात्सर्वविद्याविकासःसृष्टिसमकालादेव प्रसरति तस्मात्सर्वविद्या गौणमुख्यान्यतमभावेन स्व स्व विषयं प्रकटयन्ती निखिल जगदुत्पादक समस्तविद्योद्भासक परमात्मनः साक्षात्परम्परया वा सम्बन्धं सोसूच्यत एवेति । गणितविद्ययोचितो लाभो युक्तिसंगत एव ।

तदेवमवधातोर्व्युत्पादित ओम् इति शब्दः पूर्वमुपवर्णितः । अधुना व्युत्पन्न ओं शब्दो विविच्यते । अकारोकारमकाराणां व्याकरण रीतिसंधानेन सिद्ध ओम् शब्दोऽव्युत्पन्न इत्युच्यते । अकारोकारौ ह्रस्वदीर्घप्लुतभेदैस्त्रिविधौस्तः । मकारोपि हलनुस्वारानुनासिक भेदैस्त्रिविध एव । अकारेण विराडग्निविश्वज्ञानम् उकारेण हिरण्य गर्भवायुतैजसज्ञानम् । मकारेणेश्वरादित्यप्राज्ञपरिज्ञानं जायते । एतेऽर्था परमात्मनः पवित्रनाम्नि ओम् शब्दे विद्यन्ते । व्याख्यातश्चेदं महर्षिणा दयानन्दस्वामिना पंचमहायज्ञविधिनाम्नि पुस्तके तत एवावगन्तव्यम् ।

अथ ओं शब्दस्य वर्णयोजनाया गूढभावो विविच्यते ।

नन्वत्र अ–उ–म् इति वर्णत्रयाणामादित अकारस्यैव कथं सन्निवेशो नान्येषामिति चेदत्राहुः– स्वर व्यञ्जनयोर्मध्ये स्वराणां प्राधान्यं स्वरेषु चाकारस्यैव श्रैष्ठ्य मिति लोके वेदे च नाप्रत्यक्षम् । वेदे यथा 'अग्निमीले' इति ऋग्वेदादिममन्त्रेऽकारादि घटिताग्निपद प्रयोगोस्ति तथा व्याकरणे पाणिनिना अ इ उ इत्यारम्भेऽकार मुच्चार्याष्टाध्यायी प्रारब्धा 'अ अ' इत्यष्टाध्याय्यवसानेचाप्य कारम्प्रयुज्यैव च पर्यवासिता । धातु पाठेप्यधिकार्थकाकारादेश्चावधातो रेवोम् शब्दः साधितः सर्ववर्णेष्वकारः प्रधानः । तथाहि सर्वाणि व्यञ्जनानि स्वरेष्वेव मिलित्वा सार्थका भवन्ति 'नान्यथा, 'स्वरानुगाएव भवन्ति व्यञ्जनवर्णा' इति तात्पर्य व.भाष्यात् ।

स्वराश्रिता व्यञ्जन वर्णा भवन्ति । तेन स्वराणां प्राधान्यं स्वरेष्वप्यन्या पेक्षयाकारस्यैव श्रैष्ठ्यम । 'अक्षराणामकारोऽस्मि' इति गीता द्युक्तै रेतद् वद्यते । पूर्णस्वतन्त्रश्चायमकारः । वर्णोच्चारणेऽकार संयोगेनैव वर्णध्वनिः स्पष्टा सरला च जायते । किन्त्वकारः स्वरूपमा च्छादयन् संयुक्त वर्णोच्चारणे वैषम्यंनोत्पादयति । एवं परमात्मनापि स्वरूपं प्रच्छाद्य संसारः प्रकटीकृतः स सर्वाश्रयोऽपि सन् निराकारोऽस्ति, एतदेवास्य परमात्मसदृशं वैशिष्ट्यम् । यथाकश्चित्परोपकारी जनः परकीय कार्यं साधयन् तत्र नाहंभावं विधत्ते प्रत्युत तत्कतृत्वं विस्मरति तथैवाकारोऽपि, एतस्मै पर प्रियमभिरोचते । इकारादि स्वरेषु, नेदं वैशिष्ट्यंयेनैव हल वर्णैनेकारादयः संयुज्यन्ते तत्रैव स्वरूपं प्रकटयन्ति तद्ध्वनिं स्वानुकूलां निर्मिमते । एतेस्वराः हल् रूपेणापि परिवर्तयन्ति । स्वरत्वेप्ययं दोषोऽस्त्येवैषु, अकारे तु नायं दोषः । सदैव स्वातन्त्र्यमनुभवन् तस्यैव पक्षमकारोवलम्बते स्वरूपञ्च न जहाति कदापि । अकारोहियदेकारादिभि संयुज्यते तदातु एतत्स्वरूपे ध्वनौच भेदोभवत्येव । यथा अ इ अनयोर्गुणे 'ए' इति अ उ एतयोर्गुणे 'ओ' इति जायते । किन्त्वकारस्तावदेव तत्र संयुक्तस्वरे तिष्ठति यावत्संयुक्तस्वरः स्वरूपेण वर्तते । सन्ध्यक्षरयोरेकारौकारयोरवयवस्येकारस्य, उकारस्य च परिवृत्तौ सत्यामिकारस्य यकार इति जाते उकारस्य वकार इति च जाते सत्यकार पृथग्भूय स्वकीयं रूपमाधत्ते ।

आत्मनः प्रयत्नेनऽऽहन्यमानोऽन्तस्थो वायुःकण्ठादि स्थानेषूद्गच्छन्मूर्ध्न्यभिहतो जिह्वाकण्ठादि स्थानमापाद्य वर्णपदवाक्य रूपेषु परिणमते, अष्टसु स्थानेषु मध्ये कण्ठस्यैव प्राथम्येन प्रधान त्वात्कण्ठस्थानीय वर्णोऽकार आद्यक्षर इति । सिद्धमेतेन यत् सृष्टि समकालात् परमात्मनो ज्ञानपूर्वक प्रयत्नेन यदाक्षरोच्चारणविधान मभवत्तदादौ अकार एव ध्वनिरूपेणोद्भूत् स एव नाद इत्युच्यते ।

एषोऽव्यक्त स्वरः समस्तोच्चरणीय वर्णानामाधारभूमिः । शब्द वाक्यरचना चास्य परिणामः । यथा सृष्ट्युत्पत्तीतिहासमादावार्यजनाः पठन्ति । तथैव कुशलागायका सृष्टिसमकालिकाकारमेवालापरूपेण गायन्ति । सर्वत्रसंसारेऽयमेव प्रकारः वेद नादयोश्च नित्यः सम्बन्धः। तेनैवायमकारः सर्वोत्तमः स्वरः पठ्यते लोके, यथा-बालानां बोधाय पूर्वं हिन्दी भाषायामकारस्याध्यापनं, आंग्ल भाषायां A. (ए) इति वर्णारम्भे पाठनं, तथैव यवनान्यां भाषालिप्यामपि-अलिफ, इति अकारबोधक वर्णपाठनमेव कार्यते, बालानांवर्ण-मालोच्चारणारम्भेऽकारस्यैवोच्चारणसौकर्यं दृश्यते।

शिशूनां च जन्मकाले जातकर्मण्यपि शलाकाया ओमिति पदं वैदिक रीत्योल्लिख्यते, जप्यते श्राव्यते च। तदानीम् तेन जातकर्मसंस्कारोऽर्थ निबन्धनः सम्पन्नो भवति, बालश्च तेन मेधावी जायत इति वेदविद्भि-र्मतम्। प्रणवेन संस्कृतो बाल आजन्म तमेवाभ्यसितुं सौकर्यं लभते, प्राणोत्क्रमणे च पूर्वाभ्यस्तौङ्कारानुभावनेनैव ब्रह्मणि लीयते,ब्रह्मप्राप्यत इत्यर्थः। तथोक्तम्—

"जात रूपेणवादाय कुमारस्य मुखे जुहोति मेधान्ते मित्रा वरुणा वित्येतयर्चा सदसस्पतिमद्भु तञ्च" (गोभिलगृह्यसूत्र प्र० २ कं० ७ नि० २०) मरणा वसरेऽपि "यदक्षरं वेद विदो वदन्ति" इति गीतोक्तप्रकारेणोङ्कारोच्चारणविधानं श्रूयते वेदेऽपि च ओम् क्रतोस्मर इति श्रूयते। तत्प्रकृतमनुसरामः, अवर्णोच्चारणे स्वाभाविकेनानायासेनोच्चारणप्रयत्नेनच ध्वनि समानाधिकरण्यमस्ति। स्वप्ने सुषुप्तावपि परमात्म कृत्या जीवानां-श्वासोच्छ्वासयोरायान निर्याणे निरन्तरं जायेतेताभ्याम् जायमानाभ्यावमर्णस्यैव ह्रस्वदीर्घस्य प्रतिध्वनिज्ञान मुपजायेते। प्राण एव जीवाश्रयः। गुप्तप्रकाशरूपेणायंव्यापारः प्राणोत्थाने समेषां

समानगतिक इति, अनया रीत्या सर्वेव्यञ्जन वर्णा उच्चारण सामान्ये-नाकारमेवाश्रयन्ते । अतएवाकारस्यादौ प्रयोगः । नादरूपध्वनेरेवाकारोत्पत्यनन्तरमिकारादीनामुत्पत्तिः । तदुक्तम्—

"तानिशुक्राण्यभ्यतपत् तेभ्योऽभितप्तेभ्यस्त्रयोवर्णा अजायन्त अकार उकारो मकार इति, तानेकधा समभरत् तदेतत् ओमिति" ( ऐतरेय ब्रा० ५-३२ )

अकारादि : वर्णत्रयोत्पत्तिद्वारैवोमृशब्द व्याहृतित्रय वेदत्रयी लोकत्रयाद्युत्पत्तिर्बभूव । उक्तञ्चोपनिषदि—

त्रयो वेदा अजायन्त, ऋग्वेद एवाग्ने रजायत यजुर्वेदो वायोः सामवेद आदित्यात् तान् वेदानभ्यतपत् तेभ्योऽभितप्तेभ्य स्त्रीणि शुक्राण्यजायन्त भूरित्येव ऋग्वेदादजायत भुवरिति यजुर्वेदात् स्वरिति सामवेदात् । ऐत० ब्रा०; ५—३२

लोके अकारादि वर्ण त्रयेण सर्वेषां त्रित्वं द्योत्यते यथा—त्रिसंख्यात्मकाङ्कं केनाप्यङ्के न संगुण्य यत्फलंतन्मिथः संकलने योगफलं त्रिभरेव विभाजयितुं शक्यते न तत्र शिष्टं किमपि स्यात् तद्यथा चतुर्भिर्गुणित स्त्र्यङ्को द्वादश रूपाङ्कं प्राप्नोति । अस्मिंश्च वामाङ्क एको दक्षिणाङ्को द्विरित्येतयोर्योजन फलं त्रिरिति । त्रिषट् संख्योर्गुणनेनाष्टा दश जाताः । अत्राष्टैकयोर्योग फलं नव । अयमङ्क स्त्रिभिरेव विभाज्यते पुनस्त्रिभिर्गुणितः सन् सप्तविंशति रूपं गतः तत्रापि सप्तद्वयो र्योगे सति नव जायन्ते तदपि त्रिभिरेव विभाज्यते । इत्येवमेक एव त्रिरङ्को गुणनविभाजनकर्मेण संख्यानामानन्त्यं याति । तथैव जगति सर्वेपदार्थाः त्रिषु विभागेष्वेव विभक्ताः सन्तस्तिष्ठन्ति यथा त्रयो वेदास्त्रयो लोकास्तिस्रोऽवस्था जाग्रत्स्वप्नसुषुप्तयः त्रयोगुणाः सत्व रजस्तमांसीत्रियो दोषा वातपित्तकफात्मकाः । त्रयःकाला भूत

भविष्यत् वर्तमानानि त्रयो देवा अग्निवाय्वादित्याः। त्रयो लोकाः पृथवीद्यौरन्तरिक्षं, त्रयःस्वरा उदात्तानुदात्त स्वरिता इति तिस्रो मात्रा ह्रस्वदीर्घप्लुताः इत्यादि विविध पदार्थानां त्रित्व एवाव सानम् तथोङ्कारेऽपि त्रित्व विभागेन सर्वं विस्तीर्यते।

अकार घटितौ, ओमथ शब्दौ सृष्ट्यादौ प्रादुर्भूता वित्युक्तमन्यत्र—

"ओङ्कारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्वा विनिर्यातौ तस्मान्मांगलिकावुभौ (मुग्धबोधे)

प्रजापतिश्च पुरोमक्षरद्वारैव सर्वान् कामान्

सर्वान् लोकान् अन्वभवदित्युक्तं ब्राह्मण ग्रन्थेषु—( गोपथ-ब्राह्मणे )

"स ब्रह्मचर्य्यमचरत् स ओमित्येतदक्षरमपश्यत् द्विवर्ण श्चतुर्मात्रंसर्वव्यापि सर्वविम्व यातयाम ब्रह्म ब्राह्मी व्याहृतिं ब्रह्मदैवतं तया सर्वांश्च कामान् सर्वांश्च लोकान् सर्वांश्च देवान् सर्वांश्च वेदान् सर्वांश्च यज्ञान् सर्वांश्च शब्दान् सर्वांश्च व्युष्टीः सर्वाणि च भूतानि स्थावरजङ्गमान्यन्वभवत्, ( गोपथ० पू० प्र० १ ब्रा० १६ )

"ओंतत्सदिति निर्देशोब्रह्मणः" इति गीतायाञ्च।

तथाचाथशब्द घटकाकारो दर्शनग्रन्थेषुकल्पग्रन्थेष्वन्यशास्त्रे ष्वपि दृश्यत—

"अथ शब्दानुशासनम्" अथातो ब्रह्म जिज्ञासा" "अथ-शिक्षां व्याख्यास्यामः" इत्यादि, ऋग्वेदाद्यमन्त्रे च—
"अग्निमीले पुरोहितं" सामादौ च "अग्न आयाहि" इति,

तथान्यत्रापि--"अकारो वासुदेवः स्यात्" "अक्षराणामकारोऽस्मि" इति च बहुषु स्थलेषु अर्थ वैशिष्ट्यादकारोच्चारणप्राथम्यं तस्य भगवद्रूपत्वं सर्ववर्णेषु तत्प्राधान्यञ्चोक्तम्। तस्मात् अकार एव सर्वथा माङ्गलिकः सर्वहेतुभूतः प्रधानः स्वतन्त्रश्चेति निर्गलितम्॥ अतोनिष्प्रत्यूहम् 'ओम्' इति पदे प्रारम्भिकोऽकारप्रयोगः समुचित इति।

स्यादेतत्-ओङ्कारे त्रयोवर्णा "अ-उ-म्" इत्येतेषां को वाच्यार्थ इति सांप्रतं विविच्यते तावत्-अकारेण ब्रह्मण उकारेण जीवस्यमकारेण प्रकृतेरितीश्वरजीव प्रकृतीनामोङ्कारेणग्रहणम्। मध्यवर्त्युकारो जीवरूपापन्न उभयत्रेश्वरप्रकृतिस्थानापन्नाभ्यामकारमकाराभ्यां संबध्यते। अकारोकारौ स्वरौ कण्ठोष्ठस्थानीयौ विवृतप्रयत्नौ व्यञ्जनोपजीवकौ स्वतन्त्रौ यदा संयुज्येते तदापि ओ इत्येतत्सन्ध्यक्षरो भवन् कण्ठोष्ठस्थानसाम्यं विधत्ते। तथैव तद्वाचकेश्वरजीवौ स्वतन्त्रौ चेतनौ च साधर्म्यं विदधतः। परतन्त्रत्वजाड्यत्वधर्मायाः प्रकृतेः साम्यं गतो मकारः संयुक्तयोः पृथग्भूतयोर्वा जीवेश्वरयोः सान्निध्येन समन्वीयते। तत ओमिति एकाक्षरमव्ययं मन्त्ररूपंच सिध्यति। अत्रायं निरूपः त्रिषष्टिः चतुःषष्ठिवर्णा विराजन्ते, तत्रै तावान् विशेषो लृकार दीर्घवादिनांमते चतुः षष्टिः। ये किल लृकार दीर्घत्वं न मन्वते तन्मते त्रिषष्टिरिति। तत्रापि नव स्वराः स्वयं राजन्त इति स्वराः, इति व्युत्पत्तेः। ह्रस्वादि भेद भिन्नेन पुनर्द्वाविंशतिः। त्रयोविंशतिर्वा, लृकार दीर्घत्वमादाय त्रयो विंशतिः तदभावे च द्वाविंशतिरितिविवेकः शेषे व्यञ्जन पदवाच्याः। "एते पञ्चषष्टि वर्णा ब्रह्मराशिरात्मवाच" (यजु०प्रा०शा०८।१५) इति कात्यायन वचनन्तु मतान्तरेण नेयम्। तत्र स्वरेष्वपि अकारस्य प्राथम्यं स्वातन्त्र्यं श्रेष्ठत्वञ्च निगदितंप्राक्। अतएव ब्रह्मवाचक पदे अनेनेश्वर ग्रहणं भवति गुणादि साम्यात्, प्राथमिकस्थानमस्य उकारे स्वातन्त्र्यं चास्ति

पारतन्त्र्यञ्चास्ति। तच्चेत्थम्। वर्णान्तरमनपेक्ष्य ह्युच्चार्यते। अतः स्वातन्त्र्यम्। सजातीयं वीक्ष्यस्वातन्त्र्य सम्पादक आत्मीयरूपं विहाय परतन्त्रताप्रयोजक व्यञ्जन रूपञ्चादत्ते। अतएव।कारापेक्षया ग्लानिं भजते। अनेनहि जीवस्य ग्रहणं साम्यात्, इत्थञ्च तत्साम्यम्-- यथोकारस्यावस्थाद्वयं तद्वज्जीवस्यापि बंधमोक्षरूपेअवस्थेद्वे। सर्वसाम्यातिशयमीश्वरमनुशयनं तद्विपरीतञ्च। ब्रह्मचविद्यास्वभावं, न च तदविद्याया आश्रयः संभवति, विरोधात्, नहि प्रततौष्ण्यप्रकाशेसवितरि तमोऽवस्थातुमुत्सहते। यथाच प्रकाशस्तमो विरोधी तथा विद्याप्यविद्या विरोधिनीति। कथंसा विद्यास्वभावंब्रह्माश्रयेत। कथं वा तदनुशय्यमानं जीवमाश्रयेत। न च तदनाश्रयन्त्या तया जीवस्यवन्धो युक्तः। एवञ्च यदा जीवोब्रह्मानुशेते तदा वन्धेन विनिर्मुक्तः सन्नानन्दंभजते। यदाच स्वप्नेऽपि ज्ञानरिक्तां, जडां प्रकृतिमनुशेते तदान्धेन तमसादर्शनात्मकेनाज्ञानेन युक्तः सन् उच्चावचनाना योनि प्राप्तिपरिहारलक्षणं संसारं भजते। एवंचावस्थाद्वयसाम्येनोकारेण जीवस्य ग्रहणम्। अतएव च ओमितिपदे मध्ये उकारप्रयोगः। तद्वदेवच जीवोपि जगत्पितुः जगज्जनन्याः प्रकृतेश्चमध्ये तिष्ठति। अधुना मकारोवशिष्यते। अस्यापि रहस्यमयं वृत्तान्तं विचार्यताम्। तथाहि संस्कृताक्षरेषु पञ्चैव वर्गाः सन्ति। कवर्गश्चवर्ग ष्टवर्ग-स्तवर्गःपवर्गश्चेति तद्यथा- एकस्मिन्वर्गे पञ्चाक्षराणि भवन्ति। पञ्चस्वपि वर्गेषु मकार इति अन्तिममक्षरं विद्यते। ओमिति शब्दमपिदरीदृश्यताम्। यदस्मिन्मकारो ऽन्तिमः। आकस्मिकघटनेयं किम्? नैवं वाच्यम्। ऋषिभिः सम्प्रधार्य ओमित्यस्य रचनानुकूलतयैवस्वाक्षरमालानिर्मिता। ईश्वरं प्रति नेतुमेवेमानिसर्वाणि प्रकाराणि सन्तीति मन्तव्यम्। हे पूताः सहृदयाः स्मर्तव्यं यदपय ईश्वर एवनिमग्नाः सन्त आशेरतेस्म, तमेवाभितो ऽद्राक्षुस्तमेवचावोबुधिपत। अतएवतेषां समस्तासुक्रियासु समस्तेषु मन्त्रेषुचेश्वरमेवादरीदर्शन्। किञ्चमकारस्यावस्थाद्वयं

स्थूला विन्दुरूपा (अनुस्वाररूपा) च, अनेनप्रकृतेर्ग्रहणम्। यतोहि स्थूला व्याकृतरूपा दृष्टिपथमागता, सूक्ष्मा-अव्याकृतरूपासत्वरजस्तमसां साम्यावस्थेति यावत्। यद्यपि ओं शब्दः प्रधानतया ब्रह्मवाचक इत्यस्मिन्ननेक प्रमाणानि पूर्वमेवावोचाम। अन्यान्यपि वक्ष्यामः। परन्तु एतद्विभाव्यताम् यदाहि अयमोम्शब्दःपृथक्पृथक्सम्भूयार्थात् त्रिष्वक्षरेषु विभज्यते तदानायं केवलस्य ब्रह्मणो वाचको अपितु अकारेण ब्रह्मणः, उकारेण जीवस्य, मकारेण प्रकृतेरविधायक इत्यवधेयम्।

अस्तु पुनः प्रकृतमनुसरामः। अव्ययत्वञ्चास्य "कृन्मेजन्तः" इति मान्तत्वादेव, निपातेषु चाप्यस्य पाठस्तस्माद्वैयाकरणा "निपाता आद्युदात्ता" इति 'ओम्' इत्यस्या द्युदात्तत्वं समामनन्ति अतएव "प्रणवश्च" (प्रा० शा-२।५१) इति प्रातिशाख्ये उक्तम्। पूर्वमयम् 'ओम्' शब्दो ऽवधातो र्व्युत्पादितः। गोपथ ब्राह्मणे तु ओम् शब्दः आप्लृ धातोः पृषोदरादित्वात् साधितः तदुक्तम्—

"को धातुराप्धातुरवतिमप्येके रूप सामान्यादर्थसामान्यान्नेदीयस्तस्मादापेरोङ्कारः सर्वमाप्नोतीत्यर्थः" (गोपथ-१।४६)

उभयथाच व्युत्पत्याव्ययत्वेनाविकारीओङ्कारादिर्मकारान्तो द्विवर्ण एकाक्षर इति प्रतिपद्यते—

मंत्रत्वञ्चास्याधुना निर्णीयते ऋषिछन्द। देवतास्वर विशिष्टत्वमेव मन्त्राणामागमेषुस्मर्यते "मननान्मन्त्राः" इत्यपि निरुक्तोक्तेः अकारादि वर्णत्रयाणां भूर्भुवःस्वरिति तिस्रो व्याहृतयः अग्नि वाय्वादित्या इति त्रयो देवा गायत्री त्रिष्टुब्जगत्यश्छन्दांसि ब्रह्माऋषिः विश्वतैजस प्राज्ञाधिष्ठातृ विराड्हिरण्यगर्भेश्वराः यथासंख्यम् जाग्रत् स्वप्नसुषुप्त्यवस्थात्रयस्य क्रमेण साक्षित्वंचैषैकाक्षरा ऋग् ब्रह्मणस्तप सोऽग्रे प्रादुर्बभूव। एतयैवार्चा यज्ञादेवाऋषयो व्यसृज्यन्त।

एतदनुष्ठानञ्चोक्तं गोपथे—

"तदेतदक्षरं ब्राह्मणो यं यं काममिच्छेत् त्रिरात्रोपोषितः प्राङ् मुखो वाग्यतो बर्हिष्युपविश्य सहस्रकृत्व आवर्तयेतसिद्ध्यन्त्यस्यार्थाः सर्वकर्माणि चेति ब्राह्मणम्( गोपथ प्र० १ब्रा० २२)

यतो ह्यस्मिन् ओङ्कार सर्वं सन्निविष्टंतेनास्योपासनया सर्वेभावाः पूता भवन्ति । एतस्योपासनायां वेदमन्त्रसहित ओङ्कारः पठ्यते चेत्तत्प्रकारमाह "तदेतद्भद्रं ओङ्कारं पूर्वमालेभे स्वरितोदात्त एकाक्षर ओङ्कार ऋग्वेदे, त्रैस्वर्योदात्त एकाक्षर ओङ्कारो यजुर्वेदे, दीर्घ प्लुतोदात्त ओङ्कार एकाक्षरः सामवेदे ह्रस्वोदात्त एकाक्षर ओङ्कारोऽथर्व वेद इति"(गोपथ प्रा० १ब्र० २५)

यद्यपि एतस्यओम् शब्दस्य स्वरूपं न विक्रियते तथापि वैदिकमंत्रोच्चारणसाधर्म्येणास्याप्युच्चारणं विभिद्यत एव । उक्तञ्चान्यदपि-

"ओम् खं ब्रह्म खं पुराणं खं वायुरङ् खमितिहस्माह कौरव्यायणी पुत्रो वेदोऽयं ब्राह्मणा विदुर्वेदेनैव यद्वेदितव्यम् ।"

शतपथ कां० १४ अ० ८ ब्रा० १ कं० १ ।

साम्निचायं ओम् मन्त्र उद्गीथपदेन प्रयुज्यमान एक द्वि त्रि मात्रा यु निषादर्षभगान्धारषड्जमध्यमधैवतपञ्चमस्वरेणजेगीयते सामगैरिति । ओमिति ह्युद्गायति छां० १-४-१ ओमित्याश्रावयति छा० १-१-७ इत्यादि विषयस्तत एवावगन्तव्यः ! सप्तस्वर भेदोऽपि "सप्त" (प्रा० शा० १-१२७) इत्यत्र निगदव्याख्यातम् ।

तन्त्राम्नायेऽपि ओङ्कारादयो यावन्तो वर्णाः सर्वेमन्त्ररूपा अक्षरत्वेन व्यवह्रियन्ते, वर्णानां सूक्ष्मरूपाया ध्वनेरविनाश्यत्वात् । अय-

मोम् शब्दोजीवरूपेण बुद्धिप्राणेन्द्रियमनोभिः समन्वितः प्राण मय कोशव्यापारे सततमावर्त्तते, स एव जीवः ओम् रूपेण प्राणापानादि क्रियया मूलाधारादुत्थायाधिष्ठानमणिपूरानाहताज्ञाविशुद्धि चक्राणिभिन्दन् ज्योति रूपे लीयते। स एवओम् रूपो जीवो बुद्ध्यादिचतुष्टय प्राणादि सम्बन्धेनाधारचक्रसूक्ष्मां नादध्वनि मुत्पाद्यहृदयकण्ठ मूर्धास्थानान्यापन्नः ध्वनिवृद्धिक्रमेण परापश्यन्ती मध्यमावैखरीति संज्ञाभिः वाग्व्यवहारहेतुतामुपगच्छति । तदुक्तं भागवते–११ स्कंधे

स एष जीवो विवर प्रसूतिःप्राणेन घोषेण गुहां प्रविष्टः ।
मनोमयः सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः॥

अन्यच्च—

ततोऽभूत्त्रिवृदोङ्कारो योऽव्यक्त प्रभवः स्वराट् ।
यत्तल्लिङ्गं भगवतो ब्रह्मणः परमात्मनः ॥३६॥

भागवते १२ स्कं० अ०६

तस्मादेवाव्यक्तादोङ्कारादखिलं शब्दात्मकं वाङ्मयं जगत् विततम् । स एव जीवो व्यक्तध्वनिद्वारा निषादर्षभगान्धारषड्जमध्यम धैवत पंचम स्वरान् गीतिरूपं प्राप्तो बहुधा प्रपंच्यते—

उक्तं च—स्कन्दे–

प्रपंचो जायते यस्माच्चराचर विभागतः ।
वर्णाश्रमादि भेदेन पशुपक्षि मृगादिकम् ॥

यथा मृत्पिण्डसुवर्णादिना घटकुण्डलादिकार्याणि जायन्ते तथैवोम् रूपेण ब्रह्मणा कारण भूतेन नाम रूपात्मकं जगत्प्रसृतमिति ।

"एतस्मिन्नु खल्वक्षरे आकाश ओतः प्रोतश्च" (बृ० ब्रा० ८)

इति गार्गी ब्राह्मणे ओङ्कार एव सर्वं जगदधिष्ठितमिति

तत्रोक्तम्—

तस्मात्सर्वं प्रपञ्चमूलभूतौङ्कारोपासनमतीव श्रेयस्करमनायास तरं सद्यः सिद्धिकरंचेति ज्ञ ेयम् । एतदुपासने चार्थचिन्तनं मुख्यमेव नान्यथा तल्लाभः । वेदोक्त विविधमन्त्रोपासनापेक्षयौम्मन्त्रे ध्याने, उच्चारणे च सर्वोपासकानांकृते लाघवम्, ईश्वर प्रियञ्चेतन्नाम ।

"प्रिय नाम ग्रहण इव लोके" यथाहि संसारे पुरुषाः स्वप्रिय नाम ग्रहणात् प्रीणन्तितथेश्वरोपि ओमुपासनेन प्रसीदति । उपासकाश्च वर्णोच्चारणाधिक्यक्लेशा भावात् बुद्धिमनसोः व्यापारेणैव ब्रह्मण्येकाग्रवृत्तिलीना भवन्ति, तञ्च याथार्थ्येनावगम्य ध्यानेन परिपश्यन्ति पुनःपुनरर्थविचारणेन ध्यानाभ्यासेन च स्वान्तं शुद्धं सत् आत्मनि स्वरूपेणावतिष्ठति । प्रणवे हि ध्रियमाणं मन ईश्वरोन्मुखमेव भवति, ओङ्कारस्येश्वरसाक्षात्कार हेतुत्वात् । ओमीश्वरयोरभेदाच्च, नामार्थ योरभेदः सिद्धोलोके।। "सिद्धे शब्दार्थ सम्बन्धे" इति परपशास्थवार्तिकात् सिद्धे शब्देऽर्थे सम्बन्धे चेति" इति भाष्याच्च ।

इन्द्रियाणांस्वार्थेष्वनादिर्योग्यता यथा ।
तथैवार्थेषु शब्दानामनादिर्योग्यता मता ।।

इत्यभियुक्तवचनाच्च। एतयोश्च नित्यः सम्बन्धः । ईश्वरोवाच्यार्थः ओम् वाचकः । "तस्यवाचकः प्रणवः" इति (यो० सू०) तदुक्तं याज्ञवल्क्येन—

अदृष्ट विग्रहो देवो भावग्राह्यो मनोमयः ।
तस्यौङ्कारःस्मृतो नाम तेनाहूतः प्रसीदति ।।

उपासनप्रकारमुक्तमन्यत्रापि—

हृद्यविच्छिन्नमोङ्कारं घंटानादं विसोर्णवत् ।
प्राणेनोदीर्य तत्राथ पुनः संवेशयेत्स्वरम् ।।३४

एवं प्रणव संयुक्तं प्राणमेव समभ्यसेत् ॥ ३४,३५ भागवते ११।१४

इत्याद्युक्तरीतिकोपासनया ध्यानयोगमभ्यसेत् ।
तदर्थं च चिन्तयेत् तेन चित्तमाशु निरुध्यते ॥

उक्तञ्च—

"अभ्यास वैराग्याभ्यां तन्निरोधः" "तज्जपस्तदर्थभावनम्"

इत्युक्त सूत्राभ्यां तज्जपस्तदर्थचिन्तनाभ्यासाः प्रतिपादिताः। ओमित्येतदुपासिते परं ब्रह्मोपासितं भवति। ओम्पदवाच्यब्रह्मणएवोपासनाविषयत्वात्। एतस्मिन् ज्ञाते सर्वं ज्ञातं भवति, सर्वाः श्रुतयश्चास्य महिमानमाहुः। ओमिति ब्रह्म, ओमिति सर्वं, एतद्वै सत्यकाम परञ्चापरञ्च, ब्रह्म यदोङ्कारो, रसानांरसतमः परार्द्ध्यः ओमित्येतदक्षरमिदं सर्वमित्याद्याः।

स्कन्दे चास्य पुरश्चरणसंख्योक्ताः—

"साङ्गं प्रणवमाजप्य पुरश्चर्य्यां ततश्चरेत् ।
दश लक्षं जपः प्रोक्तः तदर्द्धं होम उच्यते ॥ स्कं० अ० १वै० खं०

तत्फलञ्चानादिकालक्रमागताऽविद्या तत्कार्यजगद्बन्धनध्वंस पुरस्सरं असत्पदार्थभ्रमनिवृत्त्या सच्चिदात्मनि स्वरूपेण स्थितिः। तथा च श्रुति—

"तमेवैकं जानथ आत्मानं अन्या वाचो विमुञ्चथ"
"वाचो विग्लापनं हि तत्" अमृतस्यैष सेतुः"

इत्यादिभिरपरब्रह्म निरासद्वारा परब्रह्म रूपोङ्कारोपासनमेव निरूपितम्। वाच्यवाचकयोस्तादात्म्येनेयमुक्तिः। उक्तञ्च

"प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्" ॥

अन्यच्च आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ज्ञाननिर्मथनाभ्यासात्पाशं दहति पण्डितः ”

किञ्चास्य ध्यानप्राशस्त्यमन्यत्राऽप्युपनिषत्सूक्तम् । ( ध्यानबिन्दूपनिषदि ) ।

ओमित्येकाक्षरं ब्रह्म ध्येयं सर्वमुमुक्षुभिः ।
पृथिव्यग्निश्चऋग्वेदो भूरित्येव पितामह ॥
अकारे तु लयं प्राप्ते प्रथमे प्रणवांशके ।
अन्तरिक्षं यजुर्वायुर्भुवो विष्णुर्जनार्दन ॥
उकारे तु लयं प्राप्ते द्वितीये प्रणवांशके ।
द्यौः सूर्यः सामवेदश्च स्वरित्येव महेश्वर ॥
मकारे तु लयं प्राप्ते तृतीये प्रणवांशके ।
अकारः पीत वर्णः स्याद्रजोगुण इतीरितः ॥
उकारः सात्विकः शुक्लो मकारः कृष्णतामसः ।
अष्टाङ्गं च चतुष्पादं त्रिस्थानं पञ्चदैवतम् ॥
ओङ्कारं यो न जानाति ब्राह्मणो न भवेत्तु सः ।
ओंकारप्रभवा देवा ओङ्कारप्रभवाः स्वराः ॥
ओङ्कारप्रभवं सर्वं त्रैलोक्यं सचराचरम् ।
तैलधारामिवाच्छिन्नं दीर्घघण्टानिनादवत् ॥
अवाच्यं प्रणवस्याग्रं यस्तं वेद स वेदवित् ।
हृत्पद्मकर्णिका मध्ये स्थिर दीपनिभाकृतिम् ॥
अङ्गुष्ठमात्रमचलं ध्यायेदोङ्कारमीश्वरम् ।
इडया वायुमापूर्य पूरयित्वोदरस्थितम् ॥
ओङ्कारं देहमध्यस्थं ध्यायेज्ज्वालावलीवृतम् ।
आत्मानमरणिं कृत्वा प्रणवं चोत्तरा रणिम् ॥
ध्याननिर्मथनाभ्यासाद्देवंपश्येन्निगूढवत् ।

ओङ्कारध्वनिनादेन वायोः संहरणान्तिकम् ।
यावद्बलं समादध्यात् सम्यङ् नादलयावधि ॥
गमागमस्थं गमनादि शून्यमोङ्कारमेकं रविकोटिदीप्तिम् ।
पश्यन्ति ये सर्व जनान्तरस्थं हंसात्मकं ते विरजा भवन्ति " ॥

अपिच—भूर्भुवः स्वरिमे लोकाश्चन्द्रसूर्याग्निदेवताः ।
यासु मात्रासु तिष्ठन्ति तत्परं ज्योतिरोमिति
"त्रयः कालास्त्रयो देवास्त्रयो लोकास्त्रयःस्वराः ।
त्रयोवेदाः स्थितायत्र तत्परं ज्योतिरोमिति । योगशिखोपनिषत् ।

तथाच—भूतं भव्यं भविष्यद्यत्त्रिकालोदितमव्ययम् ।
तदप्योङ्कारमेवायं विद्धि मोक्षप्रदायकम् " ॥
( नारदपरिव्राजकोपनिषद् )

संहारप्रणवः सृष्टिप्रणवश्चान्तर्बहिश्चोभयात्मकत्वात्त्रिविधे ब्रह्मप्रणवः । अन्तःप्रणवो व्यावहारिकप्रणवः । बाह्यप्रणव आर्षप्रणवः । उभयात्मको विराट्प्रणवः । संहारप्रणवो ब्रह्मप्रणव अर्धमात्रा प्रणवः । ओमिति ब्रह्म । ओमित्येकाक्षरमन्तःप्रणवं विद्धि । स चाष्टधा भिद्यते । अकारोकारमकारार्धमात्रानादविन्दु कलाशक्तिश्चेति ( नारद प० ) तथाच प्रणवेन प्राणायामोप्युक्तः—

ओमित्येकाक्षरं ब्रह्म ओमित्येतेन रेचयेत् ।
दिव्यमन्त्रेण बहुधा कुर्यादात्ममलमुक्तये ॥ (अमृतनादोपनिषद )

यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणः । अथ य एदतक्षरं विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः (बृ. ब्र. ८ ) स्पष्टं चेदं ब्रह्मसूत्रे ईक्षति कर्मव्यपदेशात्सः इत्यधिकरणे एतद्वै सत्यकाम इत्युपक्रम्य 'त्रिमात्रेणोंकारेणालम्बनेन परमात्मानमभिध्यायतः फलं ब्रह्मलोकप्राप्तिरित्यादिनोप संहृतम् । अन्येष्वपि बहुषु वैदिकग्रन्थेषु बहुशोऽस्य महत्त्वंश्रूयते, तद्या

क्यानि संगृह्यन्ते । यथाहि "प्रणवेनैव साम्नोरूपं गच्छत्योम् ओमित्येते नो हास्यैष सर्व एव स सामा यज्ञो भवति— ( श० १।४।१।१ ) "यच्छुद्ध प्रणवं कुर्वन्तितदस्य (भू) लोकस्य रूपं यन्मकारान्तं तदमुष्य ( द्यु लोकस्य ) ( कौ० ब्रा० १४ । ३ ) अमृतंवैप्रणवः" (गो० उ० ३।११) ब्रह्म ह वै प्रणवः" (गो०) "अथैतस्याक्षरस्य रसं (प्रजापति)नाशक्नोत ददातुँ ओमित्यस्यैव सेयं वागभवत् ॥ ओमेव नामेषा तस्य उ प्राण एव रसः" जै० उ० १।१।६।७ "ओमिति वैसाम,, जै० उ० १।६।२ )"ओमितिमनः, जै० उ० १।६।२ ओमित्यर्थगा शुक्रम् ( गोपथ पू० २ । २४ )"ओमितीन्द्र" (जै० उ० १।६।२) ओमित्यसौयोऽसौ (सूर्यः) तपति" ( ऐतरेय ५।३२ ) ओमिति हन्तेति चन्द्रमा, ओमित्या दित्यः ( जै० उ०।३।६।२ ) "ओमिति वै स्वर्गोलोकः ( ऐ० ५।३२ ) ओमित्येतदक्षरसमृतम् ।" ( जै० उ० ३।३६।५ ) "तदेतत्सत्यमक्षरं यदोमिति, तस्मिन्नापः प्रतिष्ठिताः" जै० उ० १।१०।२)"तस्मादोमित्येव प्रतिगृहीयात् तद्धि सत्यम् तद्देवा विदुः" । ( श० ४।३।२।१३ ) "ओमित्येतृच प्रतिगर एव तथेति गाथाचा ओति वै दैवं तथेति मानुषम्" ऐ० ७।१८ । '-यद्वै नेत्यृच्योमितितत् ( श० १।४।१।३० ) एतद्व वा ओमिति अक्षर वेदानां त्रिविष्टपम् ( जै० उ० ३।१६।७) एतद् ओमिति एवाक्षरं त्रयीविद्याः ( जै० उ० १।१८।१० )

एष ओमित्यक्षर उ ह वाव स रसः, जै० उ० १।८।५।११। यथा सूच्या पलाशानि सन्तृण्णानि स्युरेवमेतेन ओमित्यक्षरेणेमे लोकासन्तृण्णाः (जै० उ० १।१०।३। एवमेवैवं विद्वान् "ओमित्येतदेवाक्षरं समारुह्यमदोऽमृतंतपति तत्प्रपद्य ततोमृत्युना पाप्मना व्यावर्तते (जै० उ० १।१०।११)

"ओमित्येतदक्षरमुद्गीथमुपासीत" ॥ "ओमित्युद्गायति तस्योपव्याख्यानम्। ओंशब्दस्य जपपूर्वकं तदर्थेन गम्यमानमुद्गीथाभिधेयत्वेन ध्यायेत्। यस्मात्कारणादुद्गातृनाम ऋत्विक् ओमितिव्यापकं ब्रह्म उच्चैस्तमां स्वरेण गायति। अतएव ओं शब्दस्यौद्गीथापरपर्यायोऽपि भवति। अतएवच परमात्मनोऽभिधानंनेदिष्ठमोङ्कारमेव प्रतीयते। तद्यथोक्तमत्रैव—

"ओमित्युद्गायतीति। (छा० उ० १।१।१।)

यो ह वा एतमोङ्कारं न वेदावशः स्याद् इति। अथ य एवंवेद ब्रह्मवशः स्यात् इति। तस्मादोङ्कार ऋचि ऋग्भवति। यजुषियजुः। साम्निसाम। सूत्रे-सूत्रम्। ब्राह्मणे ब्राह्मणम्। श्लोके श्लोकः। प्रणवे प्रणव इति (गो० ब्रा० प्र० १।२३) अत्रहि ओंङ्कारस्य सर्वत्र व्याप्तिर्दर्शिता।

किञ्च—ते देवा भीता आसन् क इमान् सुरानपहनिष्यतीति। त ओङ्कारं ब्रह्मणः पुत्रं ज्येष्ठं ददृशुः ते

तमब्रुवन् । भवता सुखेनेमान् सुरान् जयेमेति । सहोवाच किं मे प्रतीवाहो भविष्यतीति वरंवृणीष्वेति वृणा इति स वरमवृणीत नमामनीरयित्वा ब्राह्मणा ब्रह्म वदेयुः । यदि वदेयुरब्रह्म तत्स्यादिति तथेति ते देवा देवयजनस्योत्तरार्द्धेऽसुरैः संयता आसंस्तानोङ्कारेणाग्नीध्रीयात् देवा असुरान् पराभावयन्त ॥

"तद्यत्पराभावयन्त तस्मादोङ्कारः पूर्व उच्यते" इत्युपसंहृतम । (गो० पू० १ ब्रा० २३)

शास्त्रपरिशीलनजनिते ज्ञाननिर्मलान्तवृ‌त्तयो देवाः तद्विपरीताः असुरास्ते किलेतरेतरविषयापहरणाय व्ययेतिरे । शास्त्रार्पितानीन्द्रियाणीतराण्युत्पथगामीनि अन्यायाचरणान्निवर्तयन्ति । तानि तु शास्त्रीयाण्येव कृत्ये प्रवर्तयितुं यतते । इदमेव देवानामसुरापहननम् । देवाः शास्त्रीयाणीन्द्रियाणि ओङ्कारसाहाय्यमादाय विजितवन्तः इत्यादिनात्रापि ओङ्कारश्रैष्ठ्यं प्रतीयते । अपिच "ओमित्येतदक्षरमुद्गीथमित्यादिछान्दोग्ये प्रतिपादितौङ्कारश्रैष्ठ्यमवोचम् । अपिच यद्धि किञ्चानुजानाति 'ओ३मित्येव तदाह" (छा० १।१।८)तेनेयं त्रयीविद्यावर्त्तते । ओमित्याश्रावयति । ओमिति शंसति । ओमित्युद्गायति । इत्येतस्यैवाक्षरस्यापचित्यै महिम्नारसेन (छा० १।१।६) तदित्थं संकलनया 'छान्दोग्यप्राथमिके खण्डे त्रिषट्कृत्वः' ओमित्यस्यपाठःसमुपस्थितः । अन्यदपि किञ्चित् त्रिरोङ्कारस्यापिपाठःसमायातः । तद्यथा ओ३म् तेभ्योऽभितप्तेभ्य ओङ्कारः संप्रास्रवत् । ओङ्कारेण—

सर्वावाक् संतृण्णा ओङ्कार एवेदं सर्वम् (छा० २।१३।३) प्रादुर्भूतैर्वेदैरोङ्कार वाच्यब्रह्मणः प्रकाशः समजनिष्ट । प्राथमिकं हि वेद-

ज्ञानमथ वेदशिक्षया सोपानरूपया ब्रह्मज्ञानमभूत । तथा चौङ्कार वाच्यं ब्रह्मान्वाषिता वेदा ओङ्कार एवेदं सर्वमिति गूढाशयः ।
अपिच 'ओंमृक्रतोस्मर कृतंस्मर (यजु० ४०।१७) । अत्रमृत्युमुखात्तरीतुं तमेव शरणं व्रजेतिंशास्ति भगवान्वेदः। अपिच सर्ववेदायत्पदमामनन्ति तपांसिसर्वाणिचयद्वदन्ति यदिच्छन्तो ब्रह्मचर्यंचरन्तितत्तेपदं-संग्रहेणब्रवीम्योमित्येत् ( कठ० २।१५ ) वेदादिसच्छास्त्रप्रतिपाद्यमोमेवेत्यवेहीतिशास्तिजगज्जननी उपनिषत् ।
अपिच ।" एतदालम्बनंश्रेष्ठम्, एतदालम्बनंपरम् । एतदालम्बनंज्ञात्वा ब्रह्मलोके महीयते ( कठ० २।१७ ) इति ।
अपिच—परमेवाक्षरंप्रतिपद्यत इति ( प्रश्न० ४र्थ प्र०-१० )
अपिच—"प्रायणान्तमोङ्कारमभिध्यायीत" ( प्र० ५।१ )
अपिच—यःपुनरेतंत्रिमात्रेणोमित्येतेनैवाक्षरेण परंपुरुषमभिध्यायीत ( प्र० प्र० ५ ) अपिच—तमोङ्कारेणैवायतनेनान्वेति विद्वान्यत्तच्छान्तमजरममृतमभयंपरंचेति ( प्र-प्र ५।७ ) । यो हि मरणं यावत् त्रिमात्रेणोङ्कारेण परमात्मानमभिध्यायीत स जन्ममरणादिवर्जं शान्तमजरममृतमोङ्काररूपया दृढ़या विशालयानौकया ब्रह्म प्राप्नोतीति गूढाभिसन्धिः। अपिच--ओमित्येव ध्यायथ । आत्मानं स्वस्तिवः पाराय तमसः परस्तात् ( मु० उ० २।२।६ ) अपिच—प्रणवोधनुरित्यादि अत्राप्यपारसंसारं तरीतुं ओम् इत्येव दृढ़ंविशालंशरणं प्रतिपाद्यते । अस्य सर्वव्यापकत्वं माण्डूक्येप्युक्तम्—ओमित्येतदक्षरमिदं सर्वं तस्योप व्याख्यानम् यद्भूतं भवद् भविष्यदिति सर्वम् ओङ्कार एव यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव मांडूक्यम्—तदग्रे ओङ्कारस्यात्मरूपत्वेन वर्णनं सोऽयमात्माऽध्यक्षरम् ओङ्कारोऽधि मात्रं पादा मात्रा मात्रा पादा अकार उकारो मकार इति । अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोप शमः शिवोऽद्वैत एव ओङ्कार आत्मैव संविशत्यात्मनात्मानं य एवं वेद ।

तथा चान्यदपि—ओमिति ब्रह्म ओमितीद सर्वम्। इत्यादीनि बहूनि प्रणवप्रशंसापरकानि वाक्यानि माण्डूक्ये उक्तानि। नासत्यं लेशतोऽपि कोविदैर्विभाव्यताम् यत् सर्वापि माण्डूक्योनिषद् प्रायः ओङ्कार रहस्य-मुद्गायति "ओमिति हो वाच" बृहदारण्यके अ.३ ब्रा. ६ मं. ११ तत्रायम् ओम्शब्दः सप्तवारमुत्तररूपेणाङ्गीकारार्थे याज्ञवल्क्येनोक्तम्। अग्रेऽपि पंचमाध्यायारम्भे बृहदारण्यके ओम्पदस्य वाच्यार्थत्वं ब्रह्म परकत्वं तस्यो-त्कृष्टत्वंच शांकरभाष्ये प्रतिपादितम्, ओमिति शंसत्योमित्युद्गाय-त्येवमादौ स्वाध्यायारम्भापवर्गयोः ओङ्कार प्रयोगो विनियोगादव गम्यते। श्रुतिप्रामाण्याद् ब्रह्मणो नेदिष्ठमभिधानम् ओङ्कारः। वेदोऽयं ओङ्कारो वेद विजानात्यनेन यद्वेदितव्यम् तस्माद्वेद ओङ्कारो वाच-कोऽभिधानम् तेनाभिधानेन यद्वेदितव्यं ब्रह्म प्रकाश्यमानमभिधीयमानं वेदसाधको विजानाति इत्युपलभ्यते "सर्वोह्ययं वेद ओङ्कार एवे" त्यादि पूर्वं माण्डूक्ये प्युक्तं तत एवोह्यम्। "प्रणवः सर्ववेदेषु शब्दः खे पौरुषंनृषु" "वेद्यं पवित्रं ओङ्कार" "ओमित्येकाक्षरम्" "तस्मा दोमित्युदाहृत्य" इत्यादीनिवचनान्यपि तत्प्रतिपादनपराणि न विस्मर्तव्यानि। किंच—सत्याविशुद्धिस्तत्रोक्ता विद्यैवैकपदा-भमा युक्तांप्रणवरूपेण सर्ववादाविरोधिनी (वा० अ० ६)। इत्थं सच्छास्त्रेषु 'ओम्' इत्यस्यैव महिमा जेगीयते। ननु एतावताकिं प्रतीको पासनात्रोपदिश्यते क्वचित्? अर्चादौ (मूर्त्यादौ) विष्णुभिवौङ्कारेऽ-क्षरे ब्रह्मबुद्धिंभावयेत्? अथवा ओंशब्दप्रतिपाद्यं नीरूपं निराका-रादिशब्दाभिधेयंयत्किमपि ब्रह्म वर्तते तदुपासीत? एवंचेत् को भेदः प्रणवाक्षरे? एवंप्राप्तेब्रूमः—यद्येष आशयः स्यात्तर्हि बहूनि ब्रह्माणि भविष्यन्ति। तथाहि—येऽन्नं ब्रह्मोपासते, ये प्राणं ब्रह्मोपासते (तै०) योनाम ब्रह्मोपास्ते योवाचं ब्रह्मोपास्ते योमनो ब्रह्मोपास्ते। यः सङ्कल्पं ब्रह्मोपास्ते यश्चित्तं ब्रह्मोपास्ते" इत्यादीनि (छा० उ०) इत्थञ्चान्नादी नामपिब्रह्मत्वं सेत्स्यति। एवं वेदान्तसिद्धान्तो व्याहन्येत। अतोविभक्ति सामानाधिकरण्येन न श्रुतिवाक्यानि कदर्थयितव्यानि।

किञ्च-नह्यत्रोपनिषत्सु प्रतीकोपासना विधीयते। किंतर्हिंसूक्ष्मतमस्य परमात्मनो निराकारस्य केनापि वाचकेनावश्यं भवितव्यम्। वाचकादृते वाच्यस्य बोधाभावात्। तत्रापिनेदिष्ठेन सार्थकेन तदर्थमर्म्मद्योतकेनतेन वाचकेन भवितव्यम्। ओमिति शब्दस्तंसर्वमर्थमवगमयति। अतोनिर्विशेषं ब्रह्म द्योतयितुंचिरन्तनैऋषिभिर्वाचकत्वेनोमिति शब्दः प्राधान्येन प्रयुक्तः। अर्चादीनान्तूपनिषत्सु चर्चालेशोऽपिनविद्यते। तेषामिदानीन्तनैरुपपनिषदनभिज्ञैः प्रचारितत्वात्। दृप्तवालाकेर जातशत्रोश्चाख्याने, आदित्य-चन्द्र-विद्युदादिरूपे प्रतीकेऽपि ब्रह्मोपासनां स्वयमेवोपनिषद्यदा प्रतिषेधयति तदा, कास्त्याशाऽन्यस्मिन् प्रतीके ब्रह्मोपासनामुपदिशेदिति। यद्वाचानभ्युदितमित्येवं जातीयकैर्वाक्यैर्बहुशस्तस्य निषिद्धत्वाच्च। नच सर्वेभ्यः पवित्रतम ओमित्यस्मिन्नक्षरे ब्रह्मोपासनीयमिति वाच्यम्, उपनिषत्सु तस्यक्वचिदप्यनुक्तत्वात्। स्वमहिम्नि वर्तमाने ब्रह्मण्येव तदुपासनासम्भवाच्च पितुरुपासना पितर्येव संभवति नाऽन्यस्मिन् कस्मिंश्चिद् वस्तुनीति तद्यथा। किञ्च—"आत्मेत्युपगच्छन्ति ग्राहयन्तिच" ( वे० ४।१।३ )। अत्र'तु' शब्देनानात्माव्यवच्छिद्यते। वैदिकाः खलु परमात्मन्येव परमात्मानं चिन्तन्ति। सर्वेऽपि तस्यैव सान्निध्यं यान्तीतिहेतोः। श्रुतिस्मृतयस्तमेवैकं ग्राहयन्ति=ज्ञापयन्ति नान्यदपि किञ्चित्तत्स्थाने। किञ्च–'नप्रतीके न हि सः" ( वे० ४।१।४ ) प्रतीके=मूर्त्यादौ प्रकृत्यवयवे परमात्मन उपासना न विधेया कुतः ? हि=यतः सः=प्रतीको न=आत्मा नविद्यत इत्यर्थः। परमात्मैव निदिध्यासनस्यविषयो न मूर्त्यादिः कश्चित् प्रतीक इति दृढं निश्चेतव्यम्–इति सूत्रनिर्णयः।

नन्वेवं चेत्तर्हि 'मनोब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशोब्रह्मेति" ( छा० ३।१८।१ ) आदित्यो ब्रह्मेत्यादेशः" ( छा० ३।१९।१ ) इत्यादीनां का गतिः ? अत्रोच्यते—"ब्रह्मदृष्टिरुत्कर्षात्" ( वे० ४।१।५ ) इति। ब्रह्मदृष्टिः—दृष्टिः=दर्शनं=ज्ञानमितियावत्।

येन ज्ञायते-प्रतीयते तद्दर्शनम्। अतएव वैशेषिकादीनां षएणामपि शास्त्राणां दर्शनमिति संज्ञां संगिरन्ते। इमानि किल ब्रह्मदशनसाधन-मात्राणि। उत्कर्षात्=महिम्नः=विभूतेः। सर्वत्र ब्रह्मविभूतेः सत्वादि-त्यर्थः, ननु सर्वत्रैव ब्रह्मोत्कर्षस्यसत्वात्तत्रैव मन आदिपुकथं विशे-षेणोच्यत इति चेत्? पदान्तरापेक्षयोत्कृष्टत्वात्। तथाहि—येयं मन आदिप्रतीके किल ब्रह्मबुद्धिरुपदिश्यते सा ग्रामनायके राजबुद्धि वदुत्कर्ष निमित्तादुपदिश्यते न कस्मान्निमित्तान्तरात्। यथा हि जगती-तलनायकाऽपेक्षयाऽपकृष्टोपि ग्रामनायको ग्रामीणजनतापेक्षयोत्कृष्ट त्वात् राजेतिव्यपदिश्यते तथा जगज्जन्मादि हेतु ब्रह्मापेक्षयाऽप-कृष्टोऽपिमनआदिः पदार्थान्तरापेक्षयोत्कृष्टत्वात्तत्रब्रह्मदर्शनं=ब्रह्म विभूतिरुपदिश्यते। भवति हि मनोऽध्यात्ममुत्कृष्टं करणान्तरेभ्यः, अधिभूतं चाकाशंभूतान्तरेभ्यः, तथाऽऽदित्यश्चाधिदैवतं पदार्थान्त-रेभ्यः। परब्रह्मणि परमेश्वरे च बृहत्त्वलक्षणोत्कर्षनिमित्ता ब्रह्मशब्द प्रवृतिः प्रसिद्धैव। तत्सामान्यान्मनः प्रभृतिप्रतीकेऽपि ब्रह्मदर्शननि-मित्ता तत्प्रवृत्तिर्युज्यते नास्ति नासानुपपन्नं किञ्चित्। उपासना खलु द्विधाभवति प्रतीकोपसना, अहंग्रहोपासनाच। कस्मिंश्चिद् वस्तुनि ब्रह्मेति मत्वा तद्वस्तूपासनमेव प्रतीकोपासानामाचक्षते तद्विदः। अहं ब्रह्मास्मीतीत्थं पौनःपुन्येनाभ्यासेन दृढीकरणमहं ग्रहोपासना कथ्यते बुधैः। परमात्मनिचोपासनाद्वयी न समाद्रिय इति समवलोकितम्।

किञ्च 'ब्रह्मसूत्रे' "अक्षरमम्बरान्तधृतेः" इत्यत्राक्षरपदेन ब्रह्मैवा-ध्यवसीयते न तु वर्णात्मकम् इति यदुक्तं तदस्माभिर्विशदीक्रियते। तथाहि—

"कस्मिन्नु खल्वाकाश ओतः प्रोतश्चेति स होवाचैतद् वै तदक्षरमित्यादि (बृ० उ०) 'यः' पुनरेतं त्रिमात्रे-णोमित्येतेनैवाक्षरेण, इति प्रश्नोपनिषदि च। 'ओमित्येतदक्षरं०

(मांडूक्योपनिषदि च । "ओमित्येतदक्षरम्" छान्दोग्योपनिषदि "एतदक्षरमेताञ्च" इतिमनौ "ओमित्येकाक्षरं ब्रह्म, इति गीतायामेवमन्यत्रापि च अक्षरपदेन ब्रह्मैवोपास्यत्वेनगृह्यते न तु वर्णरूपमोङ्कारमक्षरम् ।" अक्षरमम्बरान्त-धृतेः, (१।३।१०) । इति सूत्रात् यत्र कुत्रापिश्रुतमक्षरं ब्रह्मैव भवितुमर्हति । कुतः अम्बरान्त धृतेः–अम्बरमाकाशं प्रकृतिरितियावत् तत्पर्यन्तस्य विश्वस्य धृतेः–धारणादिति सूत्रार्थः । सूक्ष्मतमस्यपरमात्मनो निराकारस्य केनापि वाचकेनावश्यं भवितव्यम् । वाचकादृते वाच्यस्य बोधाभावात् । तथापि नेदिष्ठेनसार्थकेन तदर्थमर्मद्योतकेन तेनवाचकेनभवितव्यम् । ओमिति शब्दसं सर्वमर्थमवगमयति । इति पूर्वोक्तं न विस्मर्तव्यम् । अतो निर्विशेषं ब्रह्म प्रद्योतयितुं चिरंतनैः महर्षिभिर्वाचकत्वेनोमिति शब्दः प्राधान्येन प्रयुक्तः । एवञ्चौङ्कारब्रह्मणोर्वाच्य वाचकसम्बन्धः । स च सम्बन्धःशक्तिरूप एवेति तस्य ग्राहकञ्च तादात्म्यमेव । तादात्म्यञ्च "भिन्नत्वे सति, अभेदेन प्रतीयमानत्वम्" इति निश्चेतव्यम् । अतएव 'ऋचोऽक्षरे" इत्यत्र 'ओम् खं ब्रह्म, इत्यादिषु च शब्दार्थयोरभेदेन व्यवहारः संङ्गच्छते ।

उक्तञ्च हरिणा–अनादि निधनं ब्रह्म शब्दतत्वं यदक्षरम् !
विवर्ततेऽर्थभावेन प्रक्रिया जगतोयतः ( वाक्य० कां १ )

न चैवं सम्बन्धस्य तादात्म्यस्वीकारे वह्निशब्दोच्चारणे मुखे दाहापत्तिः–शब्दस्य मुखे व्यावर्तकतया विद्यमानत्वे तादात्म्यापन्नस्य वह्नेरपि तत्र भावादिति चेन्न । भेदसहिष्णोरभेदस्यापि स्वीकारात् । अर्थाद्भेदाभेदयोर्मध्येभेदो व्यावहारिकोऽभेदः प्रातिभासिको न तु समसत्ताको विरोधात् । अभेदस्तु 'इतरेतराध्यासात्' शब्दार्थप्रत्ययानां भाषते । अतएव "शब्दार्थप्रत्ययानामितरेतराध्यासात्तत्संकरस्तत्प्रविभागसंयमात्सवभूतरुतज्ञानमिति" पातञ्जल सूत्र –१–३–१० सङ्गच्छते । अतएव च शब्दे पृष्ठेपि गौ

रिति वदति। अर्थेऽपि गौरिति, ज्ञानेऽपि गौरिति। परंतु वस्तुतोऽभेद एवेति तात्पर्यम्। न च मुखे दाहापत्तिः ? दाहंप्रति वह्नेः संयोगे नैव हेतुत्वात् व्यावर्तकतया सद्भावेऽपि संयोगेन तदभावात्। नहि येन केनापि संम्बन्धेन वर्तमानं वस्तु क्वचिदपि कारणं किन्तु विशेषेणैव धर्मेणेति । अत्रेदंतत्त्वम् वाचकतास्फोटैकनिष्ठा। स्फोटोनाम नादाभिव्यंग्योवाचकः। स्फुटत्यर्थो येनेतिव्युत्पत्तेः। सच बौद्धएव। बौद्धेच तस्मिन् तादात्म्येऽपि स्वीकारे दाहादिशङ्कैव नास्ति। स्फोटे चाष्टौपक्षाः-वर्णस्फोटः पदस्फोटः, वाक्यस्फोटः, अखण्डपदस्फोटः, तादृग् वाक्य स्फोटः, । इत्थं पञ्च व्यक्तिस्फोटाः वर्णपदवाक्य भेदेन त्रिविधो जातिस्फोट इति। एवं च सङ्कलनयाष्ट। इदंमेकंपदम् एकं वाक्यमिति प्रत्ययः स्फोटसत्त्वे तदैक्ये च प्रमाणम्। तत्त्वन्तु सुधियो विभावयन्तु। आस्तां तावत्। इदानीं पुनः प्रकृतमनुसरामः। बृहदारण्यके हि गार्गी याज्ञवल्क्यसंवादेश्रूयते—

कस्मिन्नु खल्वाकाश ओतः प्रोतश्चेति। सहोवाचै तदक्षरं गार्गि ! ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वम्"

(बृ० ३–८७–८) इत्यादि, ओतश्च प्रोतश्च-विधृतः समाश्रित इति यावत्। तत्र संशयः किमिदं प्रकृतिलक्षणाकाशाश्रयत्वेन श्रुत मक्षरं जीवात्मा स्यादाहोस्वित् परब्रह्म परमेश्वर इति। कुतः संशयः योगादिति ब्रूमः। यथा ह्यक्षरशब्दः खलु न क्षरतीति विनश्यतीति योगात् परब्रह्म परमेश्वरमभिधत्ते तथा देहेन्द्रियसंघातस्वामिनं जीवात्मानमप्याचष्टे । द्वयोरेतयोरुत्पत्तिवद् विनाशस्याप्यभावात्। नन्वेवं तर्हि प्रकृतिः कुतो न सन्दिह्यते जीवात्मपरमात्मनोरिव तस्या अप्युत्पत्तिविनाशयोरनभ्युपगमात्। 'न' तदाश्रयस्यैव प्रत्युच्यमानत्वम् पूर्वं हि यदूर्ध्वं याज्ञवल्क्य ? दिवो यद् वाक् पृथिव्याः यदन्तरा द्यावा—

पृथिवी इमे, यद्भूतं भवद्भविष्यच्चेत्याचक्षते, कस्मिंस्तदोतं प्रोतम् । ( बृ० ३-८-३ ) इति गार्ग्या पृष्टे पृथिव्यादिविकार जातस्याधारे याज्ञवल्क्यः खलु "आकाशे ओतं प्रोतंच" ( बृ०. ३-८-४ ) इति तदाधारत्वेनाकाशं समादधे। न च भूता काशो भवितुमर्हति। तस्य स्वयं विकारत्वेन प्रश्नान्तर्गतत्वात्। कालत्रयवर्तिसकलविकाराश्रयत्वानुपपत्तेश्च । जीवात्मा परमात्मा च नात्राकाशशब्देनग्रहणमर्हतः' प्रश्नप्रतिवचनान्तरानुपपत्तेः । परिशिष्यते च ताभ्यामन्या जगज्जननी प्रकृतिः । तस्मात्सैवात्रा काशः स्यादिति निश्चीयते, तस्याश्चोपादानकारणत्वेनो-च्यमानं पृथिव्यादिनिखिलविकाराश्रयत्वं सुखेनोपपद्यते। "सेयं किमाधारा" इति पुनर्गार्ग्या पृष्टे तदाधारे याज्ञवल्क्येन तदाधारतयाप्रत्युच्यमानमक्षरं न जातु प्रकृतित्वेन सन्देग्धुं पार्यते । "ब्राह्मणा अभिवदन्ति" इति वचनानुपपत्तेश्च। परमात्मतत्त्वविदो हि ब्राह्मणाः शास्त्रे समाख्यायन्ते । न प्रकृति-तत्त्वविदः । तेषामब्राह्मणत्वे च नूनमिह प्रकृतितोऽन्योऽक्षर पदार्थ इति गम्यते।

स्यादेतत् मा नाम प्रकृतिरत्र सन्देहि। वर्णाः कुतो न सन्दिह्यन्ते तेषां जीवात्मपरमात्मापेक्षया प्रथममुपस्थितत्वात् । यथाहि योगः खलु नामिकी वृत्तिरास्थीयते तथा रूढिरपि तद्वृत्तिराश्रीयते, तत्र जीवात्मपरमात्मानौ योगेनाक्षरशब्दात्धियमुपावर्तेते, वर्णाश्च रूढ्या ततो वुद्धिमधिशेरते। रूढिश्चास्ति योगाद्बलीयसी रूढिर्योगमपहरतीति न्यायात् । अतोऽक्षरशब्देन तेषां जीवात्म परमात्मापेक्षया प्रथममुपस्थिति युज्यते । अथोच्यते प्रथममुपस्थिता अपि वर्णा नात्र सन्देहमर्हन्ति, तेषां सविकारस्याकाशस्य प्रकृते राश्रयत्वानुपपत्तेरिति नैतद्वक्तव्यम्। सर्वस्य रूपध्येयस्य नाम-धेयात्मकत्वेनोपपन्नत्वात्, सर्वं हि रूपधेयं नामधेयेन सम्भिन्नं

तावदनुभूयते घटोऽयं पटोऽयमिति । न च नामधेयस्य रूपधेयानुभवोपायत्वादुपायनिबन्धनोऽयंसंभेदानुभवो न तदात्मकनिबन्धन इति वक्तुं शक्यते, धूमोपाये धूमध्वजानुभवेऽदृष्टत्वात् । यदि ह्युपायनिबन्धनोऽयमनुभवो भवेत् तदा अन्यत्रापि तथा दृश्येत । न च धूमोपायो धूमध्वजानुभवो धूमसम्भिन्नं धूमध्वजमवगाहमानो दृश्यते । धूमोऽयं धूमध्वज इति । धूमाद् धूमध्वज इति वैपरीत्येनावगाहमानस्तु न तस्योपायनिबन्धनंगमयितुमर्हति यतश्च यस्य सम्भेदः खल्वनुभवपथमारोहति नूनं तदात्मकं तदिति निश्चेतुमीश्यते । निश्चयस्य यथानुभवमौचित्यात् पृथिव्यादि प्रकृतिपर्यन्तं सर्वं रूपधेयम् । नामधेयञ्च तदभिधायकाः सर्वे वर्णाः यान् किलौपनिषदाः वागिति नाम्ना व्यपदिशन्ति तथा च तदात्मकेषु तेषु सविकारस्याकाशस्य प्रकृतेस्तादात्म्येनाश्रयत्वमुपपद्यते, नास्ति कश्चिद्विरोधः ।

तस्माज्जीवात्मपरमात्मवद् वर्णा अप्यत्र सन्देग्धव्या इति । 'न' लोके योगापेक्षया रूढेर्बलीयस्त्वेपि वेदोपनिषद् ब्राह्मणेष्वबलीयस्त्वात् । लोकेहि रूढिर्योगापेक्षया बलीयसी वर्तते, तत्रैव चोक्तन्यायावतारः । लौकिकत्वात् न्यायस्य । यदि ह्येषा लोक इव वेदोपनिषद् ब्राह्मणेष्वपि बलीयसी वर्तेत तदावश्यमक्षरशब्देन जीवात्मपरमात्मभ्यां प्रथमवर्णा अभ्युपतिष्ठेरन् । न च सा तत्र बलीयसी वर्त्तते । न्यूनमुच्यते वेदोपनिषद् ब्राह्मणेषु प्रायो यौगिका योगरूढाश्च शब्दा विद्यन्ते रूढिश्च रूढमात्रवृत्तिरिति न सा तत्र सम्भावयितुमपि शक्यते प्रागेव तु तस्यास्तदपेक्षया बलीयस्त्वम् नहि यद्यत्र स्वरूपमेव न लभते तत्तत्र प्रबलं वा निर्बलं वा विचारयितुं क्षम्यते । वेदादिषु शब्दानां तथात्वञ्च महामुनेर्जैमिनेर्न्यायात् स्फुटमवगम्यते । एषहि तस्य न्यायः । "प्रोक्षणीष्वर्थ संयोगात्" (मी० १-४-११) इति । शब्दानामवयवशक्त्यार्थप्रतिपादन संभवे

समुदायशक्तिकल्पनमयुक्तमिति तदभिप्रायः। न च तत्रासम्भावितयाक्षरशब्देन वर्णाः कर्हिचिदुपस्थापयितुंशक्यन्ते । नचानुपस्थितेषु तेषु सन्देहो युज्यते। सतिकुड्ये चित्रमिति न्यायात्। अथोच्यते ओङ्कारस्तर्हि सन्देग्धव्यः। तस्य योगरूढ्याक्षर शब्दादुपस्थितिसंभवात् । यथाहि पङ्कजशब्दः खलु पङ्कजेऽरविन्दे योगरूढो वर्तते तथाक्षरशब्दोप्योङ्कारे योगरूढो द्रष्टव्यः । ततश्चास्य "यः पुनरेतंत्रिमात्रेणोमित्येतेनैवाक्षरेण" (प्र ५।५।) "ओमित्येतदक्षरम्" (छा०१।१।१।) एतदक्षरमेतञ्च" (मनुः२।७८) "ओमित्येकाक्षरं ब्रह्म" (गीता ८।१३) इत्यादि श्रुति स्मृतिभ्यो वर्णविशेषत्वाद रूढ्या अश्नुते व्याप्नोति वाचमिति योगेनोपस्थितिः सम्भवति । यथा पङ्कजस्य पङ्कजशब्दात् ? नैतद्वाच्यम् । उक्तोत्तरत्वात्, उक्तमस्योत्तरम् । यथाहि वर्णाः खलु सविकारस्याकाशस्य प्रकृतेराश्रयत्वानुपपत्त्या न सन्देहमर्हन्ति तथौङ्कारोऽपि न सन्देहमापद्यते, अविशेषात् । अवशिष्टो जीवात्मपरमात्मनोरेव संशयः। तत्र निर्णीयते "ब्रह्मैवाक्षरत्वेन गृह्यते" "अक्षरमम्बरान्तधृतेः" अस्यार्थस्त्वनुपदमेवोक्तं तत एव निर्धार्यताम्। सत्यं–प्रकृतिः जीवात्मनोः भोगापवर्गौ प्रयोजनमुररीकृत्य विषयेन्द्रियात्मकं पृथिव्यादिविकारजातमारभते । तच्च तावदेव तिष्ठते यावज्जीवात्मनः प्रयोजनमिदंन सम्पद्यते। नचैतावता तस्य कथञ्चित् विकारावस्थानेहेतुत्वे कल्प्यमानेपि प्रकृत्यवस्थानेहेतुत्वं कल्पयितुं शक्यते, नहि यत् विकारावस्थाने हेतुस्तेन प्रकृत्यवस्थानेपि हेतुना भवितव्यमित्यस्ति कश्चिन्नियमः। नच यदेकमवस्थापयति तेनापरमप्यवस्थाप्यत इति तर्कपथमारोहति। नच यस्य यदवस्थान हेतुमनुपपन्नं तस्य तदाश्रयत्वं कर्हिचित् घटते । स्पष्टश्चेदं पृथिव्यादिविकारजातमाश्रयन्त्याः प्रकृतेराश्रयस्तावत् पृच्छ्यते

"कस्मिन्नु खल्वाकाश ओत प्रोतश्चेति" ( बृ- ३।८।१ ) इति व्यक्तं च तदाश्रयोऽक्षरं प्रत्युच्यते "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति" ( बृ ३।८।६ ) "यस्मिन् भूमिरन्तरिक्षं द्यौर्य-स्मिन्नध्याहिताः ( अथर्व १०।४।१।१२ ) "यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सहप्राणैश्च सर्वैः" (मुण्डक २।२।५ ) इत्यादि श्रुतिभ्यः सविकारायाः प्रकृतेराश्रयत्वञ्च परब्रह्मणः परमेश्वरस्यैव धर्मोऽवगम्यते तत्सामान्यादिहापि तेनैवतदाश्रयेण भवितव्यमिति विज्ञायते। तस्मादत्र सविकारस्याकाशस्य प्रकृतेराश्रयत्वेन श्रुतमक्षरं परमब्रह्म परमेश्वर एव भवितुमर्हति न जीवात्मा ॥ आस्तांतावत् इतः पूर्वं वेदेष्वोङ्कारपाठो दर्शितः। तमेवाभिमुखीकृत्य तत्सिद्धिस्त-दर्थस्तेनैवोपासनाविधिस्तन्महात्म्यं, प्रतीकोपासनाब्रह्मग्रहो पासना प्रतिषेधश्च अनुपदमेव संक्षेपतः प्रदर्शितः, ओङ्कार पाठविषये यदुक्तं अग्रे दर्शयिष्यत इति तदवशिष्यते तदिदानीं प्रदर्श्यते *
तथाहि—"ओङ्कारः स्वाध्यायादौ" ( प्रा० शा० १।१६ ) इति "ओङ्काराथकारौ" ( प्रा० शा० १।८) इति च। अत्र हि सूत्रद्वयेन स्वाध्यायादौ ओङ्कारस्य' अथशब्दस्य च सामान्येन प्रयोगो विहितः अग्रे च "ओङ्कारं वेदेषु" ( प्रा० शा० १।१० ) इत्यनेन वेदादौ ओङ्कार एव प्रयोक्तव्यो नान्यदपिकिञ्चिदिति नियंयस्यते। तेन वेदादौ ओमित्यतः प्राक् हर्यादींश्छब्दान्प्रयुञ्जाना अपि प्रत्युक्ता भवन्ति। स्वाध्यायपदेन चात्र वेदस्यैव ग्रहणम् । स्वाध्यायोऽध्येतव्य इतिवद्यथा यत्तु द्वारादीनाञ्च इति सूत्रे स्वस्याध्ययनं स्वाध्याय इति प्रोवाच पतञ्जलिः तत्तु वेदस्वाध्यायस्याप्यात्मस्वरूपज्ञानार्थत्वमेवेति तात्पर्यकं ज्ञेयम् किञ्च—"तेऽधीहि भो इत्यभिचोदयन्ति गुरुः शिष्यं

* पुस्तकान्ते दर्शनीयम् ।

उपसंगृह्यसर्वे" (ऋ० प्रा०शा० १५।४) "स ओमिति प्रस्वरिति त्रिमात्रः प्रस्वार स्थान सम्भवत्युदात्तः चतुर्मात्रो वार्द्ध पूर्वोनुदात्तः षण्मात्रो वा भवति द्विःस्वरःसन्"(ऋ० प्रा० शा० १५।५) सगुरुः ओम् इति प्रस्वरति शब्दं करोति। त्रिमात्रः प्रस्वारः स ओङ्कार शब्दः त्रिमात्रः स्थाने भवतीति उव्वटः। अध्येतुरध्यायपयितुश्च नित्यं स्वर्गद्वारं ब्रह्मवरिष्ठमेतत् मुखंस्वाध्यायस्य भवेत् (ऋ०प्रा० शा० १५।६) अध्येतुः शिष्यस्याध्यापयितुश्च मुखं नित्यं प्रणवो भवति स्वर्गद्वारं वरं ब्रह्म इत्येतदक्षरं प्रतीयात्जानीयात् (इति—उव्वटः) "मुखमादौ स्वाध्यायस्य भवेत्तद् ब्रह्म नचैतत्संदध्यात्स्वाध्यायगतंपरेण (ऋ० प्रा० शा० १५।७) एतदोङ्कारं स्वाध्यायार्थं प्रयुक्तं परपादेन वार्द्धर्चेन वा न संदध्यात्। यज्ञकर्मणि तु संधानं भवति चोदितत्वात् (मन्त्रान्त ओङ्कार विधानात्) इति उव्वटः। "प्रचोदितोऽभिक्रमते यथास्य क्रमः परस्ताद्विहितस्तथैव" (ऋ० प्रा० शा० १५।८) तथा शिष्यस्य प्रचोदितो गुरुः ओङ्कारं कृत्वा अभिक्रमते अध्ययनमुच्चारयति यथास्यक्रमः आनुपूर्व्यं परस्तादपि तथा—

किञ्च—शब्दपारदृश्वना पाणिनिना ओ३मभ्यादाने ८।२।८७ इत्यनेन ओमित्यस्य प्रारम्भे प्लुतो विधीयते प्लुतस्तु त्रिमात्र एव अस्मिन् वर्णास्त्रयः। मात्रास्तिस्रः प्लुतत्वाभिधायिनाङ्केन तृतीयेनैवसमन्वितः। आकारञ्चाप्युकारञ्चमकारञ्चप्रजापतिः वेदत्रयान्निरदुहद्भूर्भुवः स्वरितीतिच (मनु० २।७६)इतिवेदत्रयादेव निर्दुग्ध इति मन्वादिभिःस्मर्यते। जपकर्मणि ओम् इत्यस्मात्परं

भूर्भुवः स्वः इति पदत्रयमुच्चार्यते तस्मादपि परा त्रिपदीगायत्री जल्प्यते कथमेवमिदं त्रित्वम् ? एतेन त्रयी विद्या सुवेदितव्या ऋणानि त्रीण्यपाकृत्यानि । त्रयोऽग्नयः परिचर्य्याः । त्रयः पदार्थाः सम्यगवगन्तव्याः त्रीणि दुःखानि अपसार्याणि इत्येवंविधानि भूयांसि ऐहिकान्यमुष्मिकानि च प्रयोजनवन्ति वस्तूनि अनुशास्ति । अन्यच्च—

"ब्राह्मणः प्रणवंकुर्यादादावन्ते च सर्वदा , स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यते" ( मनु. २।७४ ) वेदादौ तदन्तेच ओमित्यक्षरं पठनीयम् । यदि वेदारम्भे वेदान्ते च ओङ्कारशब्दं नो समुच्चरिष्यामस्तदावक्ष्यमाणदूषणभाजिनोऽभविष्याम । मंत्रोच्चारणादौ ओङ्कारेऽनुच्चार्यमाणे मंत्रोच्चारयितुः फलं शनैः-शनैः प्रणश्यति तथैवान्तेऽनुच्चार्यमाणे पाठकोऽध्रुवां स्थितिं लभते इति श्लोकार्थः । तस्मादादावन्तेच प्रणवोच्चारणमनिवार्यमिति निर्गलितोऽर्थः अन्यच्च—

"नक्षामनीरयित्वा ब्राह्मणाः ब्रह्मवदेयुः यदिवदेयुरब्रह्मतत् स्यात् ( गोपथ प्रपाठक १।२३ ) तद्यथा— "शङ्कुना सर्वाणि पर्णानि सन्तृण्णानि । एवमोङ्कारेण सर्वा वाक् सन्तृण्णा । ओङ्कार एवेदं सर्वम् ( छा० उ० २।२३।३ ) यथा सर्वाणि पल्वानि पर्णनाल्या सम्बद्धानि भवन्ति । यथा वृक्षस्य सम्पूर्णानि पत्राणि वृक्षसम्बन्धिन्य । नाड्या बद्धानि भवन्ति । तथैव सम्पूर्णा पवित्रा मंजुला वेदवाणी ओङ्कारेण बद्धास्थीयते । अतएव सर्वं जगति चलनात्मकं स्वरूपतोन्यूनाधिक्येन वर्तमानं प्रत्यक्षं घटाद्यात्मकमप्रत्यक्षमनुमानगम्य परमाण्वाकाश—मनोबुद्ध्यात्मक कार्यकारणरूपेणोभयात्मक ओङ्कार एवोङ्कारवाच्यं ब्रह्मैवास्तीत्युक्तम् भवति । अपि च—

"तमोङ्कारेणैवायतनेन नान्वेति विद्वान् यत्तच्छान्तमजरममृ

तमभयंपरञ्चेति" (प्र० उ० ५।७) किञ्च— ओंतत्सदिति निर्देशाद् ब्रह्मणस्त्रिविधःस्मृतः। ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा" (गी० १७।२३) "तस्मादोमित्युदाहृत्य यज्ञदानतपः क्रियाः। प्रवर्तन्ते विधानोक्ताः सततं ब्रह्म वादिनाम्" (गी० १७।२४) अत्रायमर्थः—ब्रह्मणः-पर ब्रह्मणईश्वरस्यनिर्देशः अभिधानशब्दः:, निर्दिश्यतेऽभिधीयते ऽनेनेति तद्व्युत्पत्तेः संज्ञा शब्दो नामेत्येतत्। ओंतत्सदिति। ओमिति ,तदिति सदिति एवं त्रिप्रकारः स्मृतः चिन्तितः "ओंक्रतोस्मर" (ईशा० १७) "ओमितिब्रह्म" (तै० उ० १।८) "तदिति वा एतस्य महतो भूतस्यनाम भवति" (ऐ० आ० ३।३।१६) "वेनस्तत् पश्यन् निहितं गुहासद्" (यजु० ३२।८) "सदेवसोम्येदमग्र आसीत" (छा०६ ८।६) इत्यादि श्रुति वाक्येषु कथितः। तेन यस्यपरस्य ब्रह्मणः परमात्मन ईश्वरस्य ओं तत् सदिति त्रिविधो वाचकः शब्दः,तेन ब्राह्मणा पुरा पूर्व-भूतसर्गारम्भे,ब्राह्मणाः मनुष्या इति प्रयोक्तव्ये वेदाध्ययनवतामेव वेदविहितेषु यज्ञादिकर्मस्वधिकार इति बोधनार्थं ब्राह्मणा इति प्रायुङ्क्त। ब्रह्मणोवेदस्य वेत्तारोऽध्येतारो यज्ञादि कर्माधिकारिणो मनुष्याः च, तथा वेदाः स्वतः प्रमाण्यमापन्ना यज्ञादिकर्मविधायका ऋग्यजुःसामनामानस्त्रिविधा वेदमन्त्राः। यत्रेदमाम्नायते

"तस्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे, छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायत (ऋ० १०।९।९) इति। "अहेबुध्निय मंत्रं मे गोपाय यमृषयस्त्रयी विदो विदुः ऋचो यजूंषि सामानि सा हि श्रीरमृता सताम्" (तै० ब्रा० १।२१)

इति च तथा यज्ञा अग्निहोत्रमुखायज्ञाः **गो मामग्ने ! अविमा-मश्वो यज्ञो नृवत्सरवासदमिदप्रभिष्यः । इलावामेषो असुर ! प्रजावान् दीर्धोरपि पृथुबुध्नः सभावान्** ( ऋ० ४।२।५ ) **"यज्ञो वै श्रेष्ठतमं कर्म तस्मान्मनुष्येभ्यो यज्ञं प्राह"** ( गो० ३०।२।१३ ) **"यज्ञमुखं वै अग्निहोत्रम्** ( तै० सं० १।६।१० ) इत्यादि श्रुति वाक्येभ्यः, यज्ञग्रहणेनात्र तपोदाने अपिगृह्येते यज्ञ दान तपः क्रिया इत्यग्रिम श्लोके तयोर्ग्रहणात्। **"तपसा युजा विजहि शत्रून्"** ( ऋ० १०।८३।३ )

**"तपसा वैलोकं जयन्ति"** ( शत ३।४।४।२७ ) **पृणीयादिन्ना धमानायतव्यान्"** ( ऋ० १।११३।५ ) इत्यादि श्रुति वाक्यानि चात्र प्रमाणानिद्रष्टव्यानि । तेनयज्ञाः=तपोदानयज्ञा इतिविवक्षितंवेदि-तव्यम्। आहारास्तु स्वास्थ्यहेतुत्वाद्दृष्टार्थाः, नादृष्टार्थाः, यथातपो-दानयज्ञाः, तेचाहाराः सात्विका एव प्रायेणवेदविद्भिरुपादीयन्ते न राजसाः, न तामसाः, इत्यग्रिमश्लोकेन तानग्रहीष्ट, विहिताव्यधायि-षत ब्रह्मणा तेननिरमायिषतेत्यर्थः।

"तस्मादोमित्युदाहृत्य, यज्ञदानतपःक्रियाः प्रवर्तन्ते विधानोक्ताः सततं ब्रह्म वादिनाम" ( गी० १७।२४ ) यस्माद् ब्रह्मणापरमात्मना पुरा ब्राह्मणाः, वेदा, यज्ञाश्च विहिताः, तस्मादेवहेतोः ब्रह्म वदन शीला नामास्तिकानां वेद विहिताः यज्ञदानतपःक्रियाः, ओमित्येतद्ब्रह्मण परमेश्वरस्य नामादावुदाहृत्य=प्रथममुच्चार्य=प्रवर्तन्ते=अनुष्ठीयन्ते प्रारम्भन्त इत्यर्थ । यत्रेदंश्रूयते–"ओमितिब्रह्माप्रस्तौति ओमित्यग्निहोत्रमनुजा नाति । ओमितिब्राह्मणः प्रवक्ष्यन्नाह" ( तै०उ०१।८ ) इति विविध-प्रकारैः प्रणवमुच्चार्य वेदा अध्येतव्या इति सुतरांप्रतीयते । "( १।२७ )

इति गोपथेऽपीदम् प्रतिपादितं प्रथममेव। अन्यच्च-प्रणवं पूर्वमुद्धृत्य सच्चित्पदमुदाहरेत् । एकंपदान्ते ब्रह्मेति मंत्रोद्धारःप्रकीर्त्तितः ( महानिर्वाणतन्त्र तृतीयोल्लासः )

अपिच—

सिद्धानाञ्चैव सर्वेषां, वेद वेदास्त्रयो यथा ।
अन्येषामपि शास्त्राणां निष्ठाथोङ्कार उच्यते ॥
प्रणवाद्या यतो वेदाः प्रणवे पर्यवस्थिताः ।
वाङ्मयं प्रणवः सर्वं तस्मात्प्रणवमभ्यसेत् ॥ याज्ञवल्क्यः ।

उक्तं च—

ओङ्कारः स्वर्गद्वारं तद्ब्रह्म अध्येष्यमाण एतदपि प्रतिपद्यते ।
विकथां--चान्यां कृत्वा एवं लौकिक्या वाचा व्यावर्तते ॥
आपस्तम्बः ।

तथा च—स्मृतिः—

ओङ्कारः पूर्वमुच्चार्यस्ततो वेदानधीयते ।
प्राणायामैस्त्रिभिः पूतस्तत ओङ्कारमर्हति ॥

इत्यादि वाक्यैरोङ्कारपूर्वाणामेव मंत्राणां पाठो बहुशो वर्ण्यते अन्यच्च—"प्लुतादिः प्रणवेऽप्लुतादिरवसाने" ( आश्वलायन सू० अ० २. खं० ३ ) "ते देवा देवयजनस्योत्तरार्द्धेऽसुरैः संयता आसन् तानोङ्कारेणाग्नीध्रीयाद्देवा असुरान् पराभावयन्त तद्यत्पराभावयन्त तस्मादोङ्कारः पूर्वं उच्यते" (गोपथ ब्राह्मणः प्र० १ ब्राह्मण. २३) इत्येवमोङ्कारस्य मंत्रादौ पाठ आगमेषु पठ्यत एवेति किम्बहुना— किमायातम्? यावन्तो वेदमन्त्रास्तावदेवादौ ओङ्कार पाठइति निष्प्रत्यूहम्। तदित्थं मन्त्रादौ संक्षेपत ओङ्कार प्रयोगं विमृश्य मन्त्रान्तेप्यधुना

विचार्यते । सर्वषांवेदमन्त्राणां "प्रणवष्टे ८।२।८६" अत्र यज्ञ-कर्मणीत्यनुवर्तते । कर्मशब्दः क्रियामाह । यज्ञपदेन चाग्नि होत्रप्रभृतयः सामान्येन गृह्यन्ते । यज्ञमुखमग्निहोत्रमित्याद्युक्तेः । इति सूत्रार्थः इति न्यासः । अनेन यज्ञकर्मणि टेरोमित्या देशोविदधाति पारदर्शी महर्षिः पाणिनिः । "अपांरेतांसि जिन्वतोम्" विश्वे देवा यजमानश्च सीदतोम् (यजु० १५-५४, ) इत्याद्युदाहरणेषु क्रमशः टेः स्थान ओमादेशोभवति । टिसंज्ञाचात्र अचोन्त्यादिटि" इत्यनेन भवति, (अष्टा० प्र० अ०पा०सू०६३ ) । अचंप्रगृह्य यदन्त्यादितत् टिसंज्ञं भवतीति सूत्रार्थः ।। अत्रोदाह-रणयोः क्रमशस्तेरिकारस्य तकारस्य अकारस्य चसूत्रेण टिसंज्ञा प्रणव ष्टे इति सूत्रेणै च तत्स्थाने ओमादेशः । एतेन सर्वेऽपि वैदिकमन्त्रा ओमित्यनेनैवाद्यावसानेऽपि समन्विताः सन्तीति विभावयन्तु सुधियः । यावन्तो वैदिकमन्त्रास्तावन्त अस्याक्षरस्य पाठा वेदेषु विद्यन्त इति सम्यगवगम्यते । एतेन "अग्न्यादि शब्दवन्नायं बहुशः पठितः" इत्यादि यदुक्तं भवद्भिस्तदयुक्तम् । प्रत्युत सर्वेभ्यः शब्देभ्यो बहुल तरोऽयमेव पठितो भवति । सर्वमन्त्रान्ते सर्वमन्त्रादौ चास्यैवोच्चारण विधानान् न पृथग भूयानस्यपाठः कृतोऽस्ति । एतेन सर्वमन्त्रैः ब्रह्मैव समन्वीयते । तदुक्तं तत्तु समन्वयात् ( वेदा० १।१।४ ) इति सूत्रे । तद्ब्रह्म सर्व वेदमन्त्रैः प्रतिपाद्यविषयोऽस्ति समन्वयात् सम्बन्धात् युक्त्या श्रुत्या च तत्रैव तत्सम्बन्धादवगम्यत इत्यर्थः । तथाहि यदिदं मनुष्येषु प्रतिदिनमुपचीयमानं ज्ञानैश्वर्यमुपलभ्यते । न च तत्स्वा-भाविकंभवितुमर्हति । स्वाभाविकत्वे तस्य परसाहाय्यानपेक्षत्वप्रस-ङ्गात् । नहि स्वाभाविकं किञ्चिदात्मलाभाय परसाहाय्यमपेक्षते यच्चापेक्षते न तत् स्वाभाविकम् ।। किन्तु नैमित्तिकम् । उपलभ्यमान ज्ञानैश्वर्यं तु नियमेनात्मलाभाय परसहाय्यमपेक्षत इति प्रत्यक्ष मेतत् कथमन्यथा तत्सम्पत्तये महाविद्यालयाः स्थाप्यन्ते । तत्राचार्या

श्च विद्याचणाः समाहृत्य समाहृत्य नियुज्यन्ते। तदुपचयाय पुस्तकानि च विविधविषयाणि सम्पाद्यन्ते। नैमित्तिकत्वे चाधुनैव सर्गारम्भेऽपि निमित्तेन केनचिदवश्यं भवितव्यम् । नैमित्तिकस्य निमित्तमन्तरा निर्वृत्त्यनुपपत्तेर्नह्यन्तरेण निमित्तं क्वचिन्नैमित्तिकस्य निर्वृत्तिरुपपद्यते । नैमित्तिकं निमित्तमन्तरा निर्वृत्तिं लभते चेति व्याघातात्। सर्गादिभुवो मनुष्याश्च सर्वेऽनधीतविद्यत्वेनाज्ञातार्थ परिभाषत्वात् समानबुद्धयोनपरस्परस्मै ज्ञानैश्वर्यप्रदानाय निमित्त भावमुपयातुमर्हन्ति। पारिशेष्यात् सर्वज्ञं सर्वशक्ति ओम् पदवाच्यं ब्रह्मैवतेभ्यो वेदलक्षणेन शास्त्रेणादौ ज्ञानैश्वर्यं प्रददातीति सुविज्ञायते-स्मर्यते च दर्शनान्तरेऽपि × पूर्वेषामपि गुरुः कालेनानवच्छेदात् ( योग १।२६ ) इति यथाहि ब्रह्मेदानीन्तनानामस्माकं वेदेन भगवता ज्ञानैश्वर्यं प्रददद् गुरुः तथा सर्गादिभुवां पूर्वेषामपि तल्लक्षणेन शास्त्रेणज्ञानैश्वर्यं प्रददद्गुरुरध्यवसातव्यस्तेचास्मदादयश्च शरीरित्वात् कालेनावच्छिद्यन्ते। ब्रह्मचाशरीरि न तत् कालेन कथञ्चिदवच्छिद्यते। तेनादः पूर्वेषामपि गुरुरिति सङ्गच्छते। शास्त्रस्यचास्य न ततोऽन्यः कश्चिद्योनिः कारणं कर्त्तोपपद्यते। अन्यो हि तद्योनिर्भवन्नधिको वा स्यात्समोवा। न च ब्रह्मणोऽधिको वा समो वा कश्चिद् विद्यते साम्यातिशयविनिर्मुक्तस्यैव ब्रह्मत्वाभ्युपगमात् ।

तदेव युष्माभिर्जगतो जन्मादिकारणं ब्रह्माभ्युपगम्यते, यत् खलु न केनचिदन्येनातिशय्यते । न वा साम्यं प्रपद्यते । साक्षाच्चैतद् भगवती श्रुतिरभिधत्ते "न किरिन्द्र ? त्वदुत्तरो ज्यायां अस्ति वृत्रहन् न किरेव यथा त्वम्,, ( ऋ० ३ । ६ । १६ । १ ) इति। "न तत्समश्चाभ्यधिकश्च दृश्यते, । ( श्वे० ६ । ८। ) इति च। तत्रनिरतिशय-सार्वज्ञवीजम् ( यो १ग० । २५ ) इति च, तदेव विविधागम शास्त्रोहापोहेनाद्यन्तयोरोङ्कारपाठो वेदमंत्रैः समन्वित इति सर्व-मनवद्यम्। अतएव तदन्ते एतस्याक्षरस्यो च्चारणोपदेशः कृत इतिगूढ

तात्पर्यम्। केवलोच्चारण प्रयोजनसम्बन्धित्वेन पुस्तक मध्येऽन्तेलेख-नस्य निष्प्रयोजनत्वान्न कस्मिंश्चित्तेन सहिताः मंत्रा लिखिताः सन्ति न च याज्ञिकैः प्रचारितमिमं नियममवलोक्य महर्षिणा वैयाकरणेनपाणिनिना "प्रणवष्टेः" इति सूत्रितमित्या शंकनीयम्। तस्यापि वेदपारदर्शित्वात्, अन्यच्च नहि स्वकल्पितंवर्णं वैदिकैः मंत्रैः सार्धं योजयितुं कोप्य-र्हति निष्प्रयोजनत्वात् प्रमाणाभावात्, आप्त पुरुषाणांतत्करणनर्हत्वाच्च-इदानीमेतदवगन्तव्यम्। यद् वेद मंत्रान्ते ओङ्कारोच्चारणोपदेश एन-मर्थं साधयति यत् साक्षात् परम्परया वा समेषां वेदानां तात्पर्यं पर ब्रह्मण्येव पर्यवस्यति, ईश्वरस्य च महतीमाज्ञामोङ्कारशब्द द्वारैव पालयेम।

अन्यदप्युदाह्रियते चैतद्ग्रन्थान्तरेभ्यः—"प्रतिप्रणवसमाधानम्" (कात्यायनश्रौत अ०। १ कं १। मं० १०) होता सामिधेनी ऋचः पठन् एकैकस्या ऋचोऽन्ते प्रणवं ब्रवीति यदा स पठति तदा होता सामिधेनी ऋचि अध्वर्युणा अग्नौ इध्माधानं कर्त्तव्यम्, इति सूत्रार्थं प्रसिद्धाग्निहोत्री विद्याधर शर्म्मा प्रोवाच, अन्यच्चापि "ओमेतिवा (का० श्रौ० सू० अ० ६। कं० १३ मं० ३०) इति, अथवा प्रणवावसानयोः ओम् इति वा प्रति गृणीयात् इति विद्याधरः। "शस्त्रान्तेनित्यम्" (का० श्रौ० अ० ६। कं० १३ सं० ३१) शस्त्रसमाप्तौ ओम् प्रतिगरः कार्य इति विद्याधरः। अपिच "ओङ्कार ऋगन्ते" (का० श्रौ० सू० १६ ७-५) इति ऋगवसाने ओङ्कारः पठनीय इति विद्याधरः। अपि च "अन्त्येक्षरे स्वरप्रभृतिप्रणवे लोपः" (का० श्रौ० १६-७-६) ऋचः सम्बन्धिनि अन्त्ये अक्षरे प्रणवे परे स्वर-प्रभृति-वर्णजातस्य लोपो-भवति, तथा "इन्द्राय दधुरिन्द्रियम्"(यजु० २०-८०) इत्यत्र अम् इति लुप्यते 'इन्द्रियाम् इति सम्पद्यते इति विद्याधरः। पुनरपि विचार्यताम् "स्वरादिमृगन्तमोङ्कारं त्रिमात्रं मकारान्तं कृत्वोत्तरस्या अर्धर्चेऽवस्ये-त्तत्संततम् समाप्तौ प्रणवेनावसानम् तस्यान्तापत्तिः (आश्वलायन श्रौ०

सू० अ० १ ख० २) "अवसाने च" तदुदाहरणम् यथा "भूरग्नि-र्ज्योतिर्ज्योतिरग्नोम्" इन्द्रोज्योतिर्भुवोज्योतिरिन्द्रोम् (आश्वलायने) अपि च 'स्वरादिरन्त ओङ्कारश्चतुर्निनर्दः, उदात्तौ प्रथमोत्तमौ अनुदात्तावितरौ उत्तरोऽनुदात्ततरः। प्लुतः प्रथमो मकारान्त उत्तमः। तदपि निदर्शनायोदाहरिष्यामः। अत्रापि "टि प्रदेशोपमर्दी" (आ० सू० अ० १ खं० ११) अपि च "प्रणवः उत्तमः" (आश्व० सू० २ खं० ४) तथा च 'ओमिति वै दैवं तथेति मानुषं दैवेन चेदेनं तन्मानुषेण च पापादेनसः प्रमुञ्चति (आश्व० श्रौ० सू० उ० अ० ३ खं० ३) इति। अत्र 'ब्रह्मणः प्रणवं कुर्यादित्याद्यपि न विस्मर्तव्यम्। तदेतत्प्रकृतसन्दर्भपर्यालोचनेन ओङ्कारस्य ऋगन्ते पाठोनिःसंशयं प्रतिपद्यते। मनुपाणिन्योरपि नास्ति मतभेदस्तत्त्वत उभयोरपिमंत्रान्ते ओमित्यभिधानेन तात्पर्यात्। वेदानामोम्पदवाच्यब्रह्मण्येव पर्यवसानादिति भावः॥ इत्थञ्च यावन्तो भगवतो वेदस्य मन्त्रास्तदपेक्षया द्विरयमोम् शब्दः प्रयोक्तव्य इतिनिष्प्रत्यूम्। अत उपपन्नोवेदेषुवहुश 'ओम् शब्द पाठ इति अत्रे दमवधार्यताम्।

अत्र सर्वतन्त्राविरोध निष्पन्नं ब्रह्म पवित्रतमं नेदिष्ठमोमित्यभिधानं द्वारीकृत्य ब्रह्मोपासनैववैदिकानामार्याणां सम्मता नाक्षरोपासना नचापि प्रतीकोपासना। अत्रहि ग्रन्थे यत्रापि कुत्रापि ग्रन्थान्तरेभ्यः प्रमाणभूताः श्लोका उदधारिषत, यैश्च कथंचिदपि प्रतीकोपासनाहोस्वित् अक्षरोपासना प्रतीयते, ते किल ओम् माहात्म्यं दर्शयितुमेवोद्धृतास्तेषां नास्त्यन्यदपि किञ्चित्प्रयोजनान्तरम् इति दिक्।

इत्थं प्रणवसिद्धीनां दिङ्-मात्र मिहदर्शितम्।
विस्तरस्तु यथाशास्त्रं वेदग्रन्थेषुदर्शितः।

---

४२ पृष्ठे निर्दिष्ट ओङ्कारपाठविषयेवेदेषु निम्नस्थलेष्वोङ्कारस्य पाठोऽवगन्तव्यः—

यजुषि—२-१३, ४०-१५, ४०-१७, ७-३३, ३३-४७।

ऋग्वेदे—७-६६-४, १०-३६-६, ५-४३-१३, १०-५०-५, १-३४-६, १-११८-७, ६-५०-७, १-३-७, १-११२-२०, १-११२-७, १-१६४-३६।

---

नानागमाब्धिमतिदुस्तरमुन्मथित्वा।<br>
निस्यन्दितामृतमिवाखिलवेदसारम्॥<br>
निःश्रेयसपदमखण्ड-सुखैक-बीज-।<br>
मोङ्कारदर्शनमिदं सुधियां मुदेस्तु॥<br>
वसुव्योमाभ्रनेत्रेऽब्दे विजयादशमी तिथौ।<br>
प्रणीयार्पयदार्येभ्योऽमृतानन्दः सरस्वती॥



